ततो विदर्भितं भूमेर्मण्डलद्वयमालिखेत्।
महादिषु नृसिंहार्णं विन्यारत्नाग्नितात्मकम्॥ ६०॥
बहि: षोड़शशूलाढ्यं शोभनं व्यक्तवर्णवत्।
एतद्द्वयन्तं समालिख्य पद्ममारचयेत्तत:॥ ६१॥
रुचिरं द्वादशदलं षट्‌त्रिंशत्केसरोज्ज्वलम्।
त्रिहृत्तराशिवीथ्याद्यै: पार्थिवान्तञ्च मण्डलम्॥ ६२॥
पूर्व्वोक्तलक्षणोपेतं शुभ दृष्टिमनोहरम्।
एवं कृते षड्‌गुणिते मण्डले सुमनोहरे।
प्राग्वत् सङ्कल्प्य कलसमर्च्चयेत् सुसमाहित:॥ ६३॥
अभ्यर्च्य पीठ नवशक्तिकान्तमङ्गानि बीजेषु च षट्सु भूय:।
गायत्रसावित्रसरस्वतीश्च शचीश्च श्रीरतिपुष्टिसंज्ञा:॥ ६४॥
ब्रह्माणमथ च विष्णुं महेश्वर धनदमदनगणनाथान्।
अभ्यर्चयेत् षट्स्वपि वह्नेः कोणेषु तद्बहि: क्रमश:॥ ६५॥
रक्तामनङ्गकुसुमा कुसुमातुरा च
नित्यामनङ्गमदनां मदनातुराख्याम्।
गौरीन्तथैव गगनां गगनस्य रेखां
पद्मां भवप्रमथिनीं शशिशेखराञ्च॥ ६६॥
एता द्विषट् प्रतिदल प्रतिपूज्य शक्ती-
स्तद्बाह्यतो यजतु मातृगणं क्रमेण।
इन्द्रादिकान् वहिरतश्च तदायुधानि
सम्पूज्य पूर्व्वविधिनाऽसु(१)मथाभिषिञ्चेत्॥ ६७॥
योऽसुमर्च्चयति मुख्यविधानं सिद्धशक्तिरपि सजपहोमै:।
स श्रियो निलयनं त्रिदशाना वन्द्यता व्रजति विष्णुसमान:॥ ६८॥

॥ ० ॥ इति श्रीप्रपञ्चसारे दशम: पटल.॥ ०॥

---

(१) "असुम्" इत्यत्र "इमम्" इति पाठान्तरम्।

## एकादशः पटलः ।

---

अथ वक्ष्ये संग्रहतो द्वादशगुणिताख्यमद्भुतयन्त्रवरम् ।
सम्पूज्य येन शक्तिं भुक्तिर्मुक्तिर्व्रजेन्नरोऽनुभवम् ॥ १ ॥
व्याहृत्या वीतशक्तिज्वलनपुरयुगद्वन्द्वमभ्युत्थशक्त्या
वीतं कोणोत्थदुर्वीजकमनु च कपोलात्तगायत्रिमन्त्रम् ।
आग्नेय्यावीतमर्णैर्वृतमनु विगतैर्भूपुराभ्याञ्च रन्ध्रे
च्लौं चिन्तारत्नकं द्वादशगुणितमिदं यन्त्रमिष्टार्थदायि ॥ २ ॥
पूर्वोक्तमानक्लृप्त्या मन्त्री त्रितयं विलिख्य वृत्तानाम् ।
विलिखेदन्तर्वर्त्तुलमनु शक्तिं स्पष्टविन्दुनिष्ठानाम् ॥ ३ ॥
द्वादशमध्यमवर्त्तुलरेखाया वहिरालिखेच्च शक्तीनाम् ।
हरियमवरुणधनाधिपदिक्षु द्वे द्वे च ताः क्रमेण स्युः ॥ ४ ॥
ईशाग्निनिर्ऋतिमरुतां दिक्ष्वेकैकं विलिख्य भूयश्च ।
वीजान्तरालनिर्गतशूलाङ्कितकोणषट्कयुगमग्नेः ॥ ५ ॥
मण्डलयुगयुगलं स्यादस्पृशदान्तरितवर्त्तुलं विशदम् ।
शक्तिं प्रवेष्टयेच्च प्रतिलोमव्याहृतिभिरन्त्यस्थाम् ॥ ६ ॥
रविकोणेषु दुरन्तां मायां विलिखेदथात्र विन्दुमतीम् ।
एकैकान्तरितास्ताः परस्परं शक्तयश्च सम्बध्युः ॥ ७ ॥
गायत्रीं प्रतिलोमतः प्रविलिखेद्दक्षैः कपोलं वहि-
र्द्वे द्वे चैव लिपी वहिश्च रचयेद्भूयस्तथा त्रैष्टुभम् ।
वर्णान् प्रानुगतांश्च भूपुरयुगे सिंहाख्यचिन्तामणी-
लिख्यादुयन्त्रमशेषदुःखशमनायोक्तं पुरा देशिकैः ॥ ८ ॥
वहिरथ षोडशपत्रं वृत्तविचित्रं च राशिवीथियुतम् ।
विरचय्य मण्डलं पुनरत्र यथोक्तं निधापयेत् कलशम् ॥ ९ ॥

आदावङ्गावरणमनु ह्रल्लेखिकाद्यायतस्त-
द्ब्राह्म्याद्याः षोडश च विकृतीर्द्वन्द्वसंख्याः क्रमेण ।
सार्द्धं भूयस्तदभिरथो षष्टिभिर्लोकपालै-
र्वज्राद्यैरष्टममपि समभ्यर्चयेद्वह्निमन्त्रः ॥ १० ॥
करालो विकराली च उमा देवी सरस्वती ।
दुर्गा शची जया लक्ष्मी रतिः स्मृतिधृती तथा ॥ ११ ॥
श्रद्धा मेधा मतिः कान्तिराद्या षोडश शक्तयः ।
विद्याक्षीपुष्टयः प्रज्ञा सिनीवाली कुहुस्तथा ॥ १२ ॥
रुद्रवीर्या प्रभा नन्दा पोषणी ऋद्धिदा शुभा ।
कालरात्रिर्महारात्रिर्भद्रकाली कपालिनी ॥ १३ ॥
विकृतिर्दण्डिमुण्डिन्यौ सेन्दुखण्डा शिखण्डिनी ।
निशुम्भशुम्भमथिनी महिषासुरमर्द्दिनी ॥ १४ ॥
इन्द्राणी चैव रुद्राणी शङ्करार्द्धशरीरिणी ।
नारी नारायणी चैव त्रिशूलिन्यपि पालिनी ॥ १५ ॥
अम्बिका ह्लादिनी चैव द्वात्रिंशच्छक्तयो मताः ।
पिङ्गलाक्षी विशालाक्षी समृद्धिर्वृद्धिरेव च ॥ १६ ॥
श्रद्धा स्वाहा स्वधाख्या च मायाभिख्या वसुन्धरा ।
त्रिलोकधात्री गायत्री सावित्री त्रिदशेश्वरी ॥ १७ ॥
सुरूपा बहुरूपा च स्कन्दमाताऽच्युतप्रिया ।
विमला सामला चैव अरुणी वारुणी (१) तथा ॥ १८ ॥
प्रकृतिर्विकृतिः सृष्टिः स्थितिः संहृतिरेव च ।
सन्ध्या माता सती हंसी मर्द्दिका (२) वज्रिका परा ॥ १९ ॥
देवमाता भगवती देवकी कमलासना ।
त्रिमुखी सप्तमुख्यौ च सुरासुरविमर्द्दिनी ॥ २० ॥

---

(१) "चारुणी" इति पाठान्तरम् ।  (२) "मर्द्दिनी" इति पाठान्तरम् ।

सुलम्बोष्ठ्यूर्द्धकेशी च बहुशिरा वृकोदरी।
रथरेखाह्वया चैव शशिरेखा तथाऽपरा ॥ २१ ॥
पुनर्गगनवेगाख्या वेगा च पवनादिका।
भूयो भुवनपालाख्या तथैव मदनातुरा ॥ २२ ॥
अनङ्गाऽनङ्गमदना भूयश्चानङ्गमेखला।
अनङ्गकुसुमा विश्वरूपाऽसुरभयङ्करी ॥ २३ ॥
अक्षोभ्यासत्यवादिन्यौ वज्ररूपा शुचिव्रता।
वरदा चैव वागीशी चतुःषष्टिः प्रकीर्त्तिताः ॥ २४ ॥
इष्ट्वा यथोक्तमिति तं कलशं निजं वा
पुत्रं तथाप्तमपि शिष्यमथाभिषिञ्चेत्।
आस्तिक्ययुक्तमथ सत्यरतं वदान्यं
विप्रप्रियं कुलकरञ्च नृपोत्तमं वा ॥ २५ ॥
विधानमेतत् सकलार्थसिद्धिकरं परं पावनमिन्दिरादम्।
आयुःप्रदं वश्यकरं रिपूणां भुक्तिप्रदं मुक्तिफलप्रदञ्च ॥ २६ ॥
पाशाङ्कुशमध्यगया शक्त्याथ जपार्चनहुतादियुतम्।
वक्ष्ये यन्त्रविधानं त्रैलोक्यप्राभृतायमानमिदम् ॥ २७ ॥
अष्टाशात्तार्णलाविहूँलयवरयुतापूर्व्वपाद्यात्यषट्कं
कोणेष्वत्स्वाङ्गसाष्टाक्षरयुगयुगलाष्टाक्षराख्यं बहिश्च।
मायोपेताक्षयुग्मस्वरमिलितलसत्केसरं साष्टपत्रं
पत्रं तन्मध्यपङ्क्तिवितयपरिलसत्पाशशक्त्यङ्कुशार्णम ॥ २८ ॥
पाशाङ्कुशावृतमनुमतिलोमकैश्च वर्णैः सरोजपुटितैन घटेन चापि।
आवीतमिष्टफलभद्रकटं(१) तदेतद्यन्त्रोत्तमस्त्विति घटार्गलनामधेयम् ॥२८॥
प्राक्प्रत्यगर्गले ह्लमथ पुनराग्नेयमारुते च ह्यम्।
दक्षोत्तरे ह्राणें नैर्ऋतशैवे ह्रं द्विपङ्क्तिशो विलिखेत् ॥ ३० ॥

---

(१) "भद्रघटम" इति पाठान्तरम्।

विलिखेच्च कर्णिकायां पाशाङ्कुशसाध्ययुतां शक्तिम् ।
अभ्यन्तराष्टकोष्ठेष्वङ्गान्यवशेषितेषु चाष्टार्णौ ॥ ३१ ॥
कोष्ठेषु षोडशस्वथ षोडशवर्णं मनुं तथा मन्त्री ।
पद्मस्य केसरेषु च युगस्वरात्मान्वितान्तया मायाम् ॥ ३२ ॥
एकैकेषु दलेषु त्रिशस्त्रिशः कर्णिकागतान्मन्त्रान् ।
पाशाङ्कुशबीजाभ्यां प्रवेष्टयेद्बाह्यतश्च नलिनस्य ॥ ३३ ॥
अनुलोमविलोमगतैः प्रवेष्टयेदक्षरैश्च तद्बाह्ये ।
तदनु घटेन सरोजस्थितेन तद्दक्षकेऽम्बुजञ्च लिखेत् ॥ ३४ ॥
विन्दन्तिका प्रतिष्ठा सन्दिष्टा पाशबीजमिति मुनिभिः ।
निजभूईहनाप्यायिनी शशधरखण्डान्वितोऽङ्कुशो भवति ॥ ३५ ॥
पाशयोशक्तिस्मरसम्मयशक्तीन्दिराङ्कुशायेति ।
एवं कामिनि रञ्जिनि ठद्वयमपरन्त्विहाष्टवर्णं स्यात् ॥ ३६ ॥
अथ गौरि रुद्रदयिते योगेश्वरि सकवचास्त्रठद्वितयैः ।
बीजादिकमिदमुक्तं शाक्तेयं षोडशाक्षरं मन्त्रम् ॥ ३७ ॥
इति कृतदलसुभूषितमतिरुचिरं लोकनयनचित्तहरम् ।
कलशोज्ज्वलमथ मण्डलमपि पीठाद्यं पुरैव परिपूज्य ॥ ३८ ॥
पूर्वप्रोक्तैः क्वाथैरेकेनापूर्य पूजयेत् कलशम् ।
हृल्लेखाद्यङ्गाद्यौ मातृसुरेशादिकौ सकुलिशाद्यौ ॥ ३९ ॥
एवं संपूज्य देवीं कलशमनु शुभैर्गन्धपुष्पादिकैस्ता
दध्याज्यक्षौद्रमिश्रैस्त्रिशतमथ पृथक् दुग्धवृक्षसमिद्भिः ।
हुत्वा दत्वा सुवर्णांशुकवसुधरणीर्दक्षिणार्थं द्विजेभ्यः
सपूज्याचार्यवर्यं वसुभिरमलधी मयतात्माभिषिञ्चेत् ॥ ४० ॥

इति कृतकलशोऽय सिच्यते येन पुंसा
स भवति कविरेन नित्यमाश्लिष्टते श्रीः ।
धनदनिरजनोशैर्मुक्ततेजा सद्दिक्षा
निरुपमचरितोऽसौ देहिना स्यात् पुरोग ॥ ४१ ॥

जपेच्चतुर्व्विंशतिलक्षमेवं सुयन्त्रितो मन्त्रवरं यथावत् ।
हविष्यभोजी परिपूर्णसंख्ये जपे पुनर्होमविधिर्व्विधेयः ॥ ४२ ॥
पयोद्रुमाणाञ्च समित्सहस्रषट्कं दधिक्षौद्रघृतावसिक्तम् ।
तिलैश्च तावज्जुहुयात्पयोऽक्तैर्द्विजोत्तमानभ्यवहारयेच्च (१) ॥ ४३ ॥
गुरुमपि परिपूज्य काञ्चनाद्यैर्जपतु च मन्त्रमथो सहस्रमात्रम् ।
भजतु च दिनशोऽसुमर्च्चनाया विधिविहितं विधिमादरेण भूयः ॥ ४४ ॥
संक्षेपतो निगदितो विधिरर्च्चनायाः
शक्तेरयं सकल (२) संहृतिमोचनाय ।
कान्त्यै श्रियै च यशसे जनरञ्जनाय
सिद्धै प्रसिद्धमहसाऽस्य परस्य धाम्नः ॥ ४५ ॥
गजमृगमदकाश्मीरैर्म्मिश्रितमः सुरभिरोचनोपेतैः ।
विलिखेदलक्तकरसालुलितैर्यन्त्राणि सकलकार्य्यार्थी (३) ॥ ४६ ॥
एभिर्व्विधानैर्भुवनेश्वरीं तां समर्च्य सिद्धै तु जपंश्च मन्त्री ।
स्तुत्यानया स्तौतु सदा समग्रप्रीत्यै समस्तार्त्तिविभञ्जिकायाः ॥ ४७ ॥
प्रसीद प्रपञ्चस्वरूपे प्रधाने प्रकृत्यात्मिके प्राणिनां प्राणसंज्ञे ।
प्रणौतुं प्रभो प्रारभे प्राञ्जलिस्त्वां प्रकृत्याऽप्रतर्क्यप्रकामप्रवृत्ते ॥ ४८ ॥
स्तुतिर्व्वाक्यवद्धा पदात्मैव वाक्यं पदन्त्वक्षरात्माऽक्षरं त्वं महेशि ।
ध्रुवं त्वां त्वमेवाक्षरैस्त्वन्मयैस्तौष्यतस्त्वन्मयी वाक्प्रवृत्तिर्यतः स्यात् ॥ ४९ ॥
अजाधोक्षजत्र्यक्षणायापि रूपं परं नाभिजानन्ति मायामयं (४) ते ।
स्तुवन्तीशितां त्वाममी स्थूलरूपां तदेतावदस्मेद्युक्तं ममापि ॥ ५० ॥

---

(१) "वाञ्छा यदुत्तया सपायसमाज्ययुक्तेन मन्त्रेण ।
साहस्रया जुहुयाद्ग्रहीमथो वशी वशयेत् ॥"
इत्यधिकः श्लोकः पुस्तकान्तरे दृश्यते ।

(२) "शक्तेरियं भजतु" इति पाठान्तरम् ।

(३) "कार्य्यार्थम्" इति पाठान्तरम् ।

(४) "मायामये" इति पाठान्तरम् ।

नमस्ते समस्तेशि बिन्दुस्वरूपे नमस्ते परत्वेन (१) तत्त्वाभिधाने ।
नमस्ते महत्त्वं प्रपन्ने प्रधाने नमस्ते त्वहङ्कारतत्त्वस्वरूपे ॥ ५१ ॥
नमः शब्दरूपे नमो व्योमरूपे नमः स्पर्शरूपे नमो वायुरूपे ।
नमो रूपतेजोरसाम्भःस्वरूपे नमस्तेऽस्तु गन्धात्मिके भूस्वरूपे ॥ ५२ ॥
नमः श्रोत्रचर्माक्षिजिह्वाख्यनासाख्यवाक्पाणिपत्पायुसोपस्थरूपे ।
नमो बुद्ध्यहङ्कारचित्तस्वरूपे (२) विरूपे नमस्ते विभो विश्वरूपे ॥ ५३ ॥
रवित्वेन भूत्वान्तरात्मा दधासि प्रजाश्चन्द्रमस्त्वेन पुष्णासि भूयः ।
दहस्यग्निमूर्त्तिर्वहन्त्याहुतिं वा महादेवि तेजस्त्रयं त्वत्त एव ॥ ५४ ।
चतुर्वक्त्रयुक्तालसद्धंसवाहा रजःसंश्रिता ब्रह्मसंज्ञां दधाना ।
जगत्सृष्टिकार्य्या जगन्मातृभूते परं त्वत्पदं ध्यायसीशि त्वमेव ॥ ५५ ॥
विराजत्किरीटा लसच्छङ्खचक्रा वहन्ती च नारायणाख्यां जगत्सु ।
गुणं सत्त्वमास्थाय विश्वस्थितिं यः करोतीह सोऽंशोऽपि देवि त्वमेव ॥५६॥
जटाबद्धचन्द्राहिगङ्गा त्रिनेत्रा जगत्संहरन्तीश्च कल्पावसाने ।
तमःसंश्रिता रुद्रसंज्ञा दधाना वहन्ती परब्रह्ममाले बिभासि ॥ ५७ ॥
सचिन्ताक्षमाला सुधाकुम्भलेखाधरा त्रीक्षणार्द्धेन्दुराजत्कपर्द्दा ।
सुशुक्लांशुकाकल्पदेहा सरस्वत्यपि त्वन्मयैवेशि वाचामधीशा ॥ ५८ ॥
लसच्छङ्खचक्रा चलत्खड्गभीमा नदत्सिंहवाहा ज्वलत्तुङ्गमौलिः ।
द्रवद्दैत्यवर्गा स्तुवत्सिद्धसङ्घा त्वमेवेशि दुर्गापि सर्गादिहीने ॥ ५९ ॥
पुराराति देहार्द्धभागा भवानी गिरीन्द्रात्मजात्वेन येषा विभाति ।
महायोगिवन्द्या महेशा सुनाथा महेश्यम्बिका तत्त्वतस्त्वन्मयैव ॥ ६० ॥
लसत्कौस्तुभोद्भासिते व्योमनीले वसन्तीश्च वक्षःस्थले कैटभारेः ।
जगद्दुर्लभा (३) सर्वलोकैकनाथा श्रियं तां महादेव्यहं त्वामवैमि ॥६१॥
षडाद्रीड्गुहाखाक्षपोत्रीन्द्रकाणां महाभैरवस्यापि चिह्नं वहन्त्यः ।
विभो मातरः सप्त तद्रूपरूपाः स्फुरन्त्यस्त्वदंशा महादेवि ताय ॥ ६२ ॥

(१) "वरत्वेन" इति पाठान्तरम् । (३) "जगद्दुर्लभाम्" इति पाठान्तरम् ।
(२) "चित्तात्मरूपे" इति पाठान्तरम् ।

समुद्यद्दिवाकृत्सहस्राभभासा सदा सन्तताशेषविश्वावकाशे ।
लसन्मौलिबद्धेन्दुलेखे सपाशाङ्कुशाभीत्यभीष्टात्तहस्ते नमस्ते(१) ॥ ६३ ॥
प्रभा कीर्त्तिकान्ती दिवारात्रिसन्ध्याः क्रियाशा तमिस्रा क्षुधाबुद्धिमेधाः ।
धृतिर्व्वाक्स्मृतिः सन्नतिः शौच कान्ति(२)स्त्वमेवेशि येऽन्ये च शक्तिप्रभेदाः ॥६४॥
स्वरे विन्दुनादैः सशक्त्याख्यशान्तैर्नमस्तेऽस्तु भेदप्रभिन्नैरभिन्ने ।
सदा सप्तपाताललोकाचलाब्धिग्रहद्वीपधातुस्वरादिस्वरूपे ॥ ६५ ॥
नमस्ते समस्ते समस्तस्वरूपे समस्तेषु वस्तुष्वनुस्यूतशक्ते ।
स्थितस्थूलसूक्ष्मस्वरूपे महेशि स्मृते बोधरूपेऽप्यबोधस्वरूपे ॥ ६६ ॥
मनोवृत्तिरस्तु स्मृतिस्ते समस्ता तथा वाक्प्रवृत्तिः स्तुतिः स्यान्महेशि ।
शरीरप्रवृत्तिः प्रणामक्रिया स्यात् प्रसीद क्षमस्व प्रभो सन्ततं मे ॥ ६७ ॥
हृल्लेखाजपविधिमर्च्चनाविशेषानेतांस्तां स्तुतिमपि नित्यमादरेण ।
योऽभ्यस्येत् स खलु परां श्रियञ्च गत्वा शुद्धस्तद्व्रजति पदं परस्य धाम्नः॥६८॥
इति हृल्लेखाविहितो विधिरुक्तः संग्रहेण सकलोऽयम् ।
योऽस्मिन्नियतमना मन्त्री योगी स्यात् स एव भोगी च ॥ ६९ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे एकादशः पटलः ॥ * ॥

---

(१) "लसन्मौलिबद्धेन्दुरेखे त्रिनेत्रे सपाशाङ्कुशाभीत्यभीष्टात्तहस्ते" इति पाठान्तरम् ।
(२) "द्युतिर्व्वाक्स्मृतिः सन्नतिः शौच भक्तिः" इति पाठान्तरम् ।

## द्वादशः पटलः ।

अथ श्रियो मन्त्रविधिः समासतो जगद्धिताय प्रतिवक्ष्यतेऽधुना ।
सहाङ्गभेदैः सजपार्चनाहुतकर्मैः समभ्युद्धरणाय दुर्गतेः ॥ १ ॥
वियत्तुरीयस्तु विलोमतोऽनलप्रदीपितो वामविलोचनान्वितः ।
सचन्द्रखण्डः कथितो रमामनुर्मनोरथावाप्तिमहासुरद्रुमः ॥ २ ॥
ऋषिर्भृगुश्छन्दसि चोदिता निवृत् समीरिता श्रीरपि देवता पुनः ।
दृगब्धिकर्णैन मनुस्वरानलान्वितेन चास्या विहितं षडङ्गकम् ॥ ३ ॥

भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा
शुभ्राभाभेभयुग्मद्वयकरधृतकुम्भाद्भिरासिच्यमाना ।
रक्तौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या
पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रिये वः ॥ ४ ॥

संदीक्षितोऽथ गुरुणा मनुवर्यमेनं
सम्यग्जपेद्विजितधीर्दिननाथलक्षम् ।
अभ्यर्चयन्नहरहः श्रियमादरेण
मन्त्री सुशुद्धचरितो रहितो वधूभिः ॥ ५ ॥

जपावसाने दिनकृत्सहस्रमब्जैः सरोजैर्मधुरत्रयाक्तैः ।
हुनेत्त्रिमेर्वा विधिनाथ बिल्वः समिद्वरैर्मन्त्रिवरस्त्रिभिर्वा ॥ ६ ॥
दधिराष्टपत्रमथ वारिरुहं गुणवृत्तराशिचतुरस्रयुतम् ।
प्रविधाय पीठमपि तत्र यजेन्नवशक्तिभिः सह रमामथ ताः ॥ ७ ॥

विभूतिरुन्नतिः कान्तिर्हृष्टिः कीर्तिश्च सन्नतिः ।
व्युष्टिरुत्कृष्टिऋद्धिश्च रमाया नव शक्तयः ॥ ८ ॥

यावाह्य मध्यकमले यथावत् समर्चनीया विधिना रमा सा ।
कृत्वा यथाशक्ति पुनर्गुरुस्तु तं सेचयेत् प्रयतमात्ममित्रम् ॥ ९ ॥

अङ्गै: प्रथमावृतिरपि मूर्त्तिभिचतुष्कनिधियुगैरपरा ।
पत्त्रष्टकेन चान्या चरमा ककुबीश्वरै: समभ्यर्च्या ॥ १० ॥

वासुदेव: सङ्कर्षण: प्रद्युम्नश्चानिरुद्धक: ।
दमक: सलिलश्चैव गुग्गुलुश्च कुरण्टक: ॥ ११ ॥
वराकी (१) विमला चैव कमला वनमालिका ।
विभीषिका मालिका च शाङ्करी वसुमालिका ॥ १२ ॥

अनयैव च पूर्व्वसेवया परितुष्टा कमला प्रसीदति ।
धनधान्यसमृद्धिसंकुलामचिरादेव च मन्त्रिणे श्रियम् ॥ १३ ॥
अभ्युरोजद्वयसेऽभिनिष्ठंस्त्रिलक्षमेनं प्रजपेच्च मन्त्री ।
श्रियं विचिन्त्यार्कगतां यथावत् दरिद्रताया भवन्ति प्रमुक्त ॥ १४ ॥
वसतावुपविश्य कैटभारे: कमलाहृत्तनले तथा त्रिलक्षम् ।
जपतोऽपि भवेच्च काङ्क्षितार्थादधिको वत्सरतो वसुप्रपञ्च: ॥ १५ ॥
जुहुयादशोकदहने सहतैरपि तण्डुलै: सकलवश्यकमम् ।
खदिरानले त्रिमधुरैरपि तैर्धनदश्च राजकुलवश्यमपि ॥ १६ ॥

समधुरनलिनानां लक्षहोमादनश्मी-
परिगतमपि जन्तुं प्राप्नुयाच्छ्री समग्रा ।
धनविभवसमृद्ध्या नित्यमाह्लादयन्ती
त्यजति न करुणार्द्रा तस्य सा सन्ततिञ्च ॥ १७ ॥

बिल्वं श्रीसूक्तजापी निजभुवि मुखजो वर्द्धयित्वास्य पूर्व्वं
पत्रैस्त्रिस्वादुयुक्तै: कुसुमफलसमिद्भिस्तत: स्कन्धभेदै: ।
तन्मूलैर्मण्डलात् प्राक् सुनियतचरितोऽसौ हुताग्निर्मलात्मा
रूपं पश्येद्रमाया: कथमिव च पुनस्तत् कुले स्यादलक्ष्मी: ॥ १८ ॥
हृदयकमलवर्णत: परस्तादमृतमनन्तयुतं तथाय सिद्धे ।
हुतवहदयितेत्यसौ रमाया: प्रवरधनार्थिभिरर्थितो हि मन्त्र: ॥ १९ ॥

---

(१) "वलाका" इति पाठान्तरम् ।

दक्षोऽस्य स्याद्दषिश्छन्दसि च सुमतिभिरुक्ता विराड्देवता ।
श्रीर्देवी पद्मिनीभ्यां हृदयकशिरसी विष्णुपत्न्या शिखा च ।
मेदोरेफाद्वदाग्नैरपि च कमलरूपाचरैर्वर्म चास्त्रं
ताराद्याभिर्नमोऽन्ताभिरपि निगदितं जातियुक्ताभिरङ्गम् ॥ २० ॥
पद्मस्था पद्मनेत्रा कमलयुगवराभीतियुग्दोःसरोजा
देहोत्थाभिः प्रभाभिस्त्रिभुवनविवरं भास्वरा भासयन्ती ।
मुक्ताहाराभिरामोन्नतकुचकलशा रत्नमञ्जीरकाञ्ची-
ग्रैवेयोर्म्यङ्गदाढ्या धृतमणिमुकुटा श्रेयसे श्रीर्भवेद्वः ॥ २१ ॥

ध्यात्वैवं श्रियमपि पूर्वक्लृप्तपीठे
पत्राद्यौ प्रथममथार्चयेत्तदङ्गैः ।
अष्टाभिर्दलमनुगंशिभिस्तदन्ते
लोकेशैरिति विधिना समर्चयेत् सम्रहैः ॥ २२ ॥
दीक्षातो जपतु रमारमेशभक्तो
लक्षाणां द्वगकमसु मनुं नियत्या ।
स श्रीमान् बहुधनधान्यमङ्गलः स
मेधावी भवति च वत्सरेण मन्त्री ॥ २३ ॥

इति मन्त्रजपाहृतधीर्मधुरवितयैरयुतं जुहुयात् कमलैः ।
परिशुद्धमना न चिरात् स पुनर्लभते निजवाञ्छितमर्थचयम् ॥ २४ ॥
समुद्रगायामवतीर्य नद्यां स्वकण्ठमात्रे पयसि स्थितः सन् ।
विलक्षजाप्याद्यतमोऽप्यमात्रान्मन्त्री भवेन्नात्र विचारणीयम् ॥ २५ ॥

नन्द्यावर्तैर्जुहुत सगभीऽप्यर्च्य लक्ष्मीं सहस्रं
तावद्भिर्वैश्चिमधुरयुतैर्वा फलैः पौर्णमास्याम् ।
पञ्चम्यां वा सितसरसिजैः शुक्रवारेऽम्बुपुष्पै-
रग्यैर्मासं प्रतिहृतविधेर्वत्सरात् स्यादमाप्यः ॥ २६ ॥
तारश्रमामायाः श्रीकमले कमलालये प्रसीदयुगम् ।
बीजानि तानि पुनरपि समहालक्ष्मी हृदिन्दिरामन्त्रः ॥ २७ ॥

त्रिभिस्तु वर्णैर्हृदयं शिरोऽपि स्यात् पञ्चभिश्चाथ शिखा त्रिवर्णैः ।
त्रिभिस्तथा वर्म चतुर्भिरस्त्रं पृथक् त्रिबीजापुटितैस्तदङ्गम् ॥ २८ ॥

हस्तोद्यद्वसुपात्रपङ्कजयुगादर्शा स्फुरन्नूपुरा
ग्रैवेयाङ्गदहारकङ्कणमहामौलिर्ज्वलत्कुण्डला ।
पद्मस्था परिचारिकापरिहृता शुक्लाङ्गरागांशुका
देवी दिव्यगणार्चिता भवदघप्रध्वंसिनी स्यादिमा ॥ २९ ॥

लक्षं जपेन्मनुमिमं मधुरत्रयाक्तै-
र्बिल्वैः फलैः प्रतिहुनेदयुतं तदन्ते ।
आराधयेत् प्रतिदिनं प्रतिवक्ष्यमाण-
मार्गेण दुर्गतिभयाद्रहितो भवेत् सः ॥ ३० ॥

श्रीधरश्च हृषीकेशो वैकुण्ठो विश्वरूपकः ।
वासुदेवादयश्चाङ्गावरणात् समनन्तरम् ॥ ३१ ॥
भारतीपार्वतीचान्द्रीशचीभिरपि संयुता ।
दमकादिभिस्तृतीयाऽनुरागाद्यैश्चतुर्थ्यपि ॥ ३२ ॥
अनुरागोऽविसम्वादो विजयो वल्लभो मदः ।
हर्षो बलश्च तेजश्चेत्यष्टौ वाणा महाश्रियः ॥ ३३ ॥
अनन्तब्रह्मपर्यन्तैः पञ्चमीन्द्रादिभिर्मता ।
चक्रपद्मान्तिकै. षष्ठी वज्राद्यैरावृतिः श्रियः ॥ ३४ ॥

सम्पूज्यैवं श्रियमनुदिन यो जपेन्मन्त्रमेन
प्रोक्तां संख्यां सहुतविधिमप्युज्झितां प्राप्य लक्ष्मीम् ।
हित्वाद्व्यागवनिपशुपुत्रादिभोगैः समृद्धो
वर्षाद्देहापदि च पदमभ्येति नित्यं स विष्णोः ॥ ३५ ॥

श्रीमन्त्रेष्विति गदितेषु भक्तियुक्तः श्रीसूक्तान्यपि च जपेद्यजेद्धुनेच्च ।
श्रीसूक्ते प्रथमतरे स्वयं मुनिः स्यादन्येषां मुनय इमे भवन्ति भूयः ॥ ३६ ॥

आनन्दः कर्दमश्चैव चिक्लीतश्चेन्दिरासुतः ।
ऋचामथो तदन्यासामृषयः समुदीरिताः ॥ ३७ ॥

आद्ये सूक्तत्रये छन्दोऽनुष्टुप् कांस्ये बृहत्यपि ।
तदन्त्ययोस्त्रिष्टुबाख्यं परस्तादष्टके पुनः ॥ ३८ ॥
अनुष्टुबन्त्ये प्रस्तारपङ्क्तिश्छन्दांसि वै क्रमात् ।
अग्नी स्याता देवते च न्यासाङ्गविधिरुच्यते ॥ ३९ ॥
मूर्धाक्षिकर्णनासामुखगलदोर्हृदयनाभिगुह्येषु ।
पायूरुजानुजङ्घाचरणेषु न्यसतु सूक्तैः क्रमशः ॥ ४० ॥
सहिरण्मयी च चन्द्रा रजतहिरण्यस्रजे हिरण्याख्या ।
अङ्गानि जातियुञ्जि लय च हिरण्यवर्णान्वया तयाक्तं स्यात् ॥ ४१ ॥

अरुणकमलसंस्था तद्रजःपुञ्जवर्णा-
करकमलधृतेष्टाभीतियुग्माम्बुजा च ।
मणिमुकुटविचित्रालङ्कृता कल्पजातै-
र्भवतु भुवनमाता सन्ततं श्रीः श्रियै वः ॥ ४२ ॥

आरभ्याद्यां प्रतिपदमथ प्रागुदीचो वियुक्त
स्त्वङ्गैभिस्तनुविमलवासाः सुधौतद्विजाढ्यः ।
एकादश्यामथ परिसमाप्यार्कसाहस्रिकान्त
जापं मन्त्री प्रयजतु रमां प्राक्तनप्रोक्तपीठे ॥ ४३ ॥
पद्मा सपद्मवर्णा पद्मस्थार्द्रा च तर्पयन्त्यभिधा ।
तृप्ता ज्वलन्त्यभिख्या स्वर्णप्राकारसंज्ञका चेति ॥ ४४ ॥
मध्ये दिगाधिपाङ्गाद्यथोर्गेताम्ततश्च वज्रादीन् ।
प्रयजेच्चतुरावरणं निगदितमिति सूक्तकल्पितं विधानम् ॥४५॥
मधुघृताभ्यां जुहुयादनुदिनमष्टोत्तरं शतं मन्त्री ।
आवाहनासनार्घ्यकपाद्याचमनमधुपर्कसेकानि ॥ ४६ ॥
वासोभूषणगन्धान् सुमनोयुतधूपदीपभोज्यानि ।
मोद्वासनानि कुर्याद्धिक्षियुक्तः पञ्चदशभिरथ मनुभिः ॥ ४७ ॥
व्यस्तैरपि च समस्तैः पूजायां संयतात्मकः सिद्धैः ।
पद्मैर्बिल्वसमिद्भिः पयोऽन्नमा सर्पिषा क्रमाज्जुहुयात् ॥ ४८ ॥

एकैकं विल्वशतं द्वादश्यां भोजयीत विप्रांश्च ।
मन्दारकुन्दकुमुदकनन्द्यावर्त्ताख्यमालतीनाल्यः ।
कह्लारपद्मरक्तोत्पलकेतकचम्पकादयो ग्राह्याः ॥ ४८ ॥
परिषिञ्चेच्छिरो नित्यं सूक्तैस्तैः स्नानकर्म्मणि ।
आदित्याभिमुखो जप्यादुयावत्तावच्च तर्पयेत् ॥ ५० ॥
अर्च्चयेद्विधिनाऽनेन दिनशो जुहुयान्निशः ।
एवं करोति षण्मास योऽसौ स्यादिन्दिरापतिः ॥ ५१ ॥
उद्बुद्धमात्रे नलिने नवनीतं विनिक्षिपेत् ।
सकर्णिके सकिञ्जल्कोदरे पत्रान्तरालके ॥ ५२ ॥
पुनस्तत् पद्ममुद्धृत्य सुसमिद्धे विभावसौ ।
जुहुयादन्वयायर्चा शतमष्टोत्तरं जपन् ॥ ५३ ॥
चत्वारिंशच्चतुर्व्वारैर्म्महाश्रीस्तस्य जायते ।
कांस्योऽस्मी(१)त्यनया सम्यगेकादश घृताहुतीः ।
षण्मासं जुह्वतो नित्यं भूयात् प्रायो महेन्दिरा ॥ ५४ ॥
सूक्तैरेतैर्जपतु जुहुयादर्च्चयीतावगाहेत्-
सिञ्चेदह्नो दिनमनु तथा संयतस्तर्पयीत ।
संशुद्धात्मा विविधधनधान्याकुलाभ्यन्तरोऽसौ
मन्त्री सर्व्वैर्भुवि बहुमतः श्रीमतां स्यात् पुरोगः ॥ ५५ ॥
श्रीर्लक्ष्मीर्व्वरदा विष्णुपत्नी च सुवसुप्रदा ।
हिरण्यरूपा सस्वर्णमालिनी रजतस्रजा ॥ ५६ ॥
ससुवर्णगृहा स्वर्णप्राकारा पद्मवासिनी ।
पद्महस्ता पद्मपूर्व्वप्रिया मुक्तापदादिका ॥ ५७ ॥
अलङ्कारा तथा सूर्या चन्द्रा विल्वप्रियेश्वरी ।
भुक्तिः प्रपूर्व्वा मुक्तिश्च विभूत्यृद्धिसमृद्धयः ॥ ५८ ॥

---

(१) "कांस्योऽस्मि" इति मन्त्र श्रीसूक्तादौ द्रष्टव्यः ।

तुष्टिः पुष्टिश्च धनदा तथान्या तु धनेश्वरी (१)।
शुद्धा सम्भोगिनी भोगदा सधात्वविधात्मके ॥ ५८ ॥
द्वात्रिंशदेता: श्रीदेव्या ये मन्त्राः समुदीरिताः।
तारादिका नमोऽन्ताश्च तैरर्च्चासु बलिं हरेत्।
तर्पयेच्च महादेवीं दिनादौ (२) मन्त्रवित्तमः ॥ ६० ॥
नाभ्यक्तोऽद्यान्न नग्नः सलिलमवतरेन्न स्वपेद्याऽप्यशुचिः स
न्नाभ्यञ्ज्यान्नैव चाद्यात्तिलकृहलवणे केवलेनैव दोषाम्।
वक्ते निम्बेद्धदेवाद्दृतमपि मलिनः स्यान्न विल्वाम्बुजन्म
द्रोणाब्जौ धारयेत् के भुवमपि न वृथैवालिखेदिन्दिरार्थी ॥ ६१ ॥
सुविमलचरितः स्याच्छुद्धमाल्यानुलेपा-
भरणवसनदेहो मुख्यगन्धोत्तमाङ्गः।
सुविशदनखदन्तः शुद्धधीर्विष्णुभक्तो
विमलरुचिरशय्यः स्याच्चिरायेन्दिरार्थी ॥ ६२ ॥
दुष्टां कष्टान्वयां कलहकलुषितां मार्गदुष्टामनिष्टा-
मन्यामक्तामभक्तामतिविपुलकृशाङ्गीमतिह्रस्वदीर्घाम्।
रोगार्त्ताभोगलोलां प्रतिपुरुषचलां राजकान्तामकान्तां
काकाघोमेकचारां गृहकुसुमयुतां न स्पृशेदिन्दिरार्थी ॥ ६३ ॥
शान्तः शश्वत्स्मितमधुरपूर्व्वाभिभाषी दयार्द्रो
देवाचार्य्यातिथिद्विजनपूजारतः पुण्यशीलः।
नित्यस्नायी नियमनिरतः प्रत्यगाशामुखाशी
मन्त्री वर्णाश्रमदृढरतिः स्याच्चिरायेन्दिरार्थी ॥ ६४ ॥
श्रीमन्त्रभक्तः स्थितविष्णुशौचः श्रीसूक्तजापी स्थितधीः सुशीलः।
स्वदारतुष्टो मितभाषणाशी लोकप्रियः स्याच्चिरमिन्दिरार्थी ॥ ६५ ॥

॥ ० ॥ इति श्रीप्रपञ्चसारे द्वादशः पटलः ॥ ० ॥

---

(१) "तथान्या भुवनेश्वरी" इति पाठान्तरम्। (२) "दिनश" इति पाठान्तरम्।

## त्रयोदशः पटलः ।

अथ रमाभुवनेशिमनोभवैस्त्रिपुटसंज्ञकमन्त्रमुदीरितम् ।
सकलवर्गफलाप्तियशस्करं जगति रञ्जनदं कविताकरम् ॥ १ ॥
बीजैस्त्रिभिर्द्विरुक्तैः कुर्य्यादङ्गानि साधकः सिद्धैः ।
पूर्व्वतरैरितयोर्व्वा द्वयोरप्येकं तदङ्गयोः प्रभजेत् ॥ २ ॥
नवकनकभासुरोर्व्वीविरचितमणिकुट्टिमे सकल्पतरौ ।
रत्नवरबद्धसिंहासननिहितसरोरुहे समासीनाम् ॥ ३ ॥
आबद्धरत्नमुकुटां (१) मणिकुण्डलोद्यत्-
केयूरकोर्म्मिरसनाह्वयनूपुराढ्याम् ।
ध्यायेद्धृताब्जयुगपाशवराङ्कुशेक्षु-
चापां सपुष्पविशिखां नवहेमवर्णाम् ॥ ४ ॥
चामरमुकुरसमुद्गकताम्बूलकरङ्कवाहिनीभिः ।
दूतीभिः समभिवृतां पश्यन्तीं साधकं प्रसन्नदृशा ॥ ५ ॥
लोकेश्वरीमिति विचिन्त्य जपेच्च मन्त्र-
मादित्यलक्षमथ मन्त्रितमो जपान्ते ।
श्रीराजवृक्षसमिधां सजवार्त्तवाना
तावत् सहस्रसमितं मधुरैर्जुहोतु ॥ ६ ॥
अङ्गैर्लक्ष्मीहरिगिरिसुताशर्व्वरत्यङ्गजातैः
षट्कोणस्थैर्निधियुगयुतैस्तद्बहिर्मातृभिश्च ।
योषिद्रूपैर्व्वहिरपि यजेल्लोकपालैस्तदेतत्
प्रोक्तं देव्या अपि सुरगणैः पूजनीयं विधानम् ॥ ७ ॥

---

(१) "आबद्धहेममुकुटाम्" इति पाठान्तरम् ।

लक्ष्मीगौरीमनसिजमयबीजानि कृत्वा कलाया
ताद्यापीन्दौ तमपि गगने तच्च सिन्दूरवर्णम् ।
स्मृत्वा बुद्ध्वा भुवनमखिलं तन्मयत्वेन मन्त्री
देवान् वश्यानपि वितनुते किं पुनर्मर्त्यजातीन् ॥ ८ ॥

य इमं भजते मनुं मनस्वी विधिना वा पुनरर्चयेद्विधानम् ।
स तु सम्यगवाप्य दृष्टभोगान् परतस्तत्परमैश्वमेति धाम ॥ ९ ॥

सहृदयभगवत्यै दान्तरेणे धराणां
समणिधरणिवधार्यारैद्विठान्ता ध्रुवाद्या ।
गदितमितिधराया मन्त्रमुत्कृष्टधात्री
सुखसुतधनधान्यप्राप्तिदं कीर्त्तिदञ्च ॥ १० ॥

ऋषिरपि वराह उक्तश्छन्दो निवृदस्य देवता धरणी ।
मनुनाऽसुनैव च पदैः षोढाविभिन्नेन निगदितोऽङ्गविधिः ॥ ११ ॥

मुख्याम्भोजे निविष्टारुणचरणतला श्यामलाङ्गी मनोज्ञा
चञ्चच्छाल्यग्रगुम्फच्छुकलसितकरा प्राप्तनीलोत्पला च ।
रत्नाकल्पाभिरामा मणिमयमुकुटा चित्रवस्त्रा प्रसन्ना
दिश्याद्विश्वम्भरा वः सततमभिमतं वल्लभा कैटभारेः ॥ १२ ॥

लक्षायुतं च सदशायुतमावसाना
प्रोक्ता धराहृदयमन्त्रजपक्रिया स्यात् ।
सर्पिष्मता सुविमलेन पयोऽन्धसास्य
होमे विधिः सकलसिद्धिकरः किलायम् ॥ १३ ॥

पीठे विष्णौ पूजयेत् पूर्वमङ्गैर्भूवह्न्यम्बुप्राणसञ्ज्ञैश्च भूतैः ।
माल्यन्ताभिः शक्तिभिः साकमाशापालैः पृथ्वीं सयतात्मोपहारैः ॥१४॥

पुष्पैः प्रियङ्गोर्मधुरत्रयाक्तैर्नीलोत्पलैर्वापि तथारुणैस्तैः ।
सहस्रमानं प्रतिजुह्वतः स्याद्गोमती शस्यकुलाकुला च ॥ १५ ॥

विष्वक्स्फुरत् पृथुलशालिमञ्जरीं यो जुहोति मधुरत्रयोचिताम् ।
नित्यशः शतमथास्य मण्डलाद्धस्तगा भवति विस्तृता मही ॥ १६ ॥

भृगोस्तु वारे निजसाध्यभूरुहिलोडिताभ: परिपक्कमन्ध:।
पयोहुताज्ञं जुहुयात् सहस्रं दुग्धेन वाऽन्येन दिनावतारे॥ १७॥
पञ्चासादनुभृगुवासरमेष होम: सम्पन्नान् समुपनयेद्वराप्रदेशान्।
पुत्रान् वा पशुमहिषीष्टजुष्टपुष्टामिष्टामप्यनुदिनमिन्दिरां समग्राम्॥१८॥

संक्षेपतो हृदयमन्त्रविधिर्धरायाः
प्रोक्तो हिताय जगतां रहितक्षमाणाम्।
एनं भजन्निति धराकमलासमृद्धः
स्यादत्र सिद्धिमपरत्र परां प्रयाति॥ १९॥

अथ पुरुषार्थचतुष्टयसिद्धिकरी मन्त्रजापनिरतानाम्।
त्वरिताख्येयं विद्या निगद्यते जपहुतार्चनविधिभि:॥ २०॥
भक्तियुतानां त्वरया सिद्धिकरी चेति मन्त्रिणां सततम्।
देव्यास्त्वरिताख्या स्यात्त्वरितं क्ष्वेड़ग्रहादिहरणतया॥ २१॥
वमहैं च तदन्त्यः शिवयुक् चरमाङ्गनाद्युसार्घिलवम्।
अन्त्यः सयोनिरस्मात्लिक: सतारो मनुर्दृशार्णयुत:॥ २२॥
तारान्तेऽस्यादावपि मायाबीजं प्रयोजयेन्मन्त्री।
तेन हि काङ्क्षितसिद्धिर्भूयादचिरेण मन्त्रविदाम्॥ २३॥
कूर्मादिभ्यां द्वाभ्यां द्वाभ्यामपि पूर्व्वपूर्व्वहीनाभ्याम्।
कुर्य्यात् सप्तभिरर्णैरङ्गानि च षट् क्रमेण मन्त्रज्ञ:॥ २४॥
कालिकगलहृन्नाभिगुह्योरुषु जानुजङ्घयो: पदयो:।
देहन्यासं कुर्य्यान्मन्त्रेण व्यापकं समस्तेन॥ २५॥
श्यामलतनुमरुणपङ्कजचरणतलां हृपलनागमञ्जीराम्।
पर्णांशुकपरिधाना वैश्याहिदन्दमेखलाकलिताम्॥ २६॥
तनुमध्यनतां पृथुस्तनयुगलां करविराजदभयवराम्।
शिखिपिच्छनान्वयनयां गुञ्जाफलगुणितभूषिताहर्णिताम्॥ २७॥
नृपफणिकृतकेयूरान्तां गलविलसद्विविधमणियुताभरणाम्।
द्विजनागविहितकुण्डलमण्डितगण्डद्वयीमुकुरशोभाम्॥ २८॥

शोणतराधरपल्लवविद्रुममणिभासुरां प्रसन्नाद्यं ।
पूर्णशशिबिम्बवदनामरुणायतलोचनत्रयीनलिनाम् ।
कुञ्चितकुन्तलविलसन्मुकुटाघटिताहिवैरिपिञ्छयुताम् ॥ २९ ॥
कैरातीं वनकुसुमोज्ज्वलां मयूरातपत्रकेतनिकाम् ।
सुरुचिरसिंहासनगां विभ्रमसमुदायमन्दिरां तरुणीम् ॥ ३० ॥
तामिनां त्वरिताख्यां ध्यात्वा कुर्यात्तपार्चनाद्योमान् ।
दीक्षां प्राप्य गुरोरथ लक्षं जप्याद्दशांशकं जुहुयात् ॥ ३१ ॥
बिल्वसमिद्भिस्त्रिमधुरसिक्ताभिः साधकः सुसंयतधीः ।
अष्टहरिविष्टरसिंहासने समावाह्य सरसिजे देवीम् ॥ ३२ ॥
अङ्गैः सह प्रणीता गायत्रीं पूजयेद्दिशां क्रमतः ।
हुङ्काराख्या खेचरिचण्डे सच्छेदनी तथा चपणी ॥ ३३ ॥
भूयस्त्रियाह्वयाहुङ्कारीसच्छेमकारिका: पूज्याः ।
सर्वोवीजा लोकेशायुधभूषान्विता दलाग्रेषु ॥ ३४ ॥
फट्कारी चाप्यग्रे शरा धनुरधारिणी च तदाद्ये ।
सम्वर्णवेत्रयष्टी द्वास्थे पूज्ये पुनर्जयाविजये ॥ ३५ ॥
कृष्णो वर्ब्बरकेशो लगुडधरः किङ्करश्च तत्पुरतः ।
अरुणैश्चन्दनकुसुमैर्वनजैरपि धूपदीपनैवेद्यैः ॥ ३६ ॥
प्रवरैश्च नृत्यगीतैः समर्चयेद्भक्तिभरावनम्रतनुः ।
जपहुतपूजाभेदैरिति सिद्धे मन्त्रजापिनो मन्त्रे ॥ ३७ ॥
नारीनरनरपतयः कुर्व्वन्ति सदा नमस्क्रियामस्मै ।
विद्याधर्यो यक्ष्यः ससुरासुरसिद्धचारणप्रमदाः ॥ ३८ ॥
अपरमथ्युविशिष्टाः साधकसङ्गेन चेतसाकुलिताः ।
स्मरशरविह्वलिताङ्ग्यो रोमाञ्चितगात्रवल्लरीललिताः ॥ ३९ ॥
घनघर्म्मबिन्दुमौक्तिकविलसत्कुचमण्डलद्युतयः ।
विस्पष्टजघनवक्षोरुहदोर्मूला: प्रगलन्त्यदन्यासाः ॥ ४० ॥

मुकुलितनयनसरोजा: प्रस्पन्दित (१) दशनवसनसंभिन्ना: ।
श्लथमानांशुकचिकुरा मदविवशस्खलितमन्दभाषिण्य: ॥ ४१ ॥
मृदुतरमस्तकविरचितनत्यञ्जलय: प्रसादकाङ्क्षिण्य: ।
ईचस्व देहि वाचं परिरम्भणपरमसौख्यमस्माकम् ॥ ४२ ॥
एहि सुरोद्यानादिषु रस्याम: स्वेच्छया निरातङ्कम् ।
इत्यादिवादिनीभि: प्रलोभ्यमानो यदा न विक्रियते मन्त्री ॥ ४३ ॥
तदैव वाञ्छितमखिलं तस्मै ददाति सा देवी ।
योनिं कुण्डस्यान्त: प्रकल्प्य तत्रानलं समाधाय ॥ ४४ ॥
सम्पूज्य पूर्व्वविधिना जुहुयात् सर्व्वार्थसिद्धये मन्त्री ।
इत्तुशकले समृद्धेर दूर्व्वाभिस्त्वायुषे श्रिये धान्यै: ॥ ४५ ॥
धान्याय यवै. पुष्ट्यै गोधूमैर्ऋद्धये तिलैर्जुहुयात् ।
जम्बूभि. स्वर्णाप्त्यै वाजीभि: शत्रुशान्तये तथाऽचतकै: ॥ ४६ ॥
अचयसिद्धेर वकुलै: कीर्त्त्यै कुमुदैर्महोदयाय तथा ।
अरुणोत्पलैश्च पुष्ट्यै मधूकजैरिष्टसिद्धयेऽशोकै: ॥ ४७ ॥
पुत्राप्त्यै पाटलजै: स्त्रीसिद्धेर निम्बजैश्च विद्विष्ट्यै ।
तुष्ट्यै नीलोत्पलकै' सचम्पकै: कनकसिद्धये पद्मै: ॥ ४८ ॥
सह किंशुकैश्च सर्व्वोपद्रवशान्त्यै स साधको जुहुयात् ।
हुतसङ्ख्या साहस्री त्रियुता वायायुतान्तिकी भवति ॥ ४९ ॥
यावत् सङ्ख्यो होमस्तावज्जप्यश्च मन्त्रिणां मन्त्र: ।
सनुमन्त्रितैश्च वारिभिरासेक: च्चेमशान्तिकृद्भवति ॥ ५० ॥
तज्जमयष्टिघातो मन्त्रितजुम्भकोदकाहतिश्च तथा ।
तत्कर्णरन्ध्रजापात् सद्यो नश्युर्विषग्रहादिरुज: ।
तद्यन्त्रस्थापनमपि विषभूतादिप्रशान्तिकृत् प्रोक्तम् ॥ ५१ ॥

---

(१) "प्रस्पन्दित" इति पाठान्तरम् ।

आख्यां मध्ये सतारे मनुमथ शतसंयुक्तविंशत्पुटेषु
प्रादक्षिण्येन शर्व्वादिकमनु विलिखेत् द्वादशावृत्ति मन्त्री ।
विंशद्दन्ताष्टशूलाकलितविरचितं यन्त्रमेतत् सुजप्तं
बद्धं छ्लेनग्रहार्त्तिं हरति विजयलक्ष्मीप्रदं कीर्त्तिदञ्च ॥ ५२ ॥
आख्या मध्यगताऽनले लिखतु दिक्पंक्तिष्वथ स्युः सझूं
च्रूं य्रूं म्रूं करणादिषष्टिपदके शैवादिकालोमनुम् ।
नैर्ऋत्यादि तथा क्रमादयमहृतं वाह्येऽनलेनावृतं
प्रोक्तं निग्रहचक्रमन्तकपुरप्राप्तिप्रदं वैरिणाम् ॥ ५३ ॥
काली माररमालीकालोनमोचचमोनली ।
मामोदे ततदे मोमारचतत्त्वत्वतचर ॥ ५४ ॥
यमापाटटपामायमाटमोटटमोटमा ।
पामो भूरिरिभूमोपा टटरीत्त्वत्त्वरी रट ॥ ५५ ॥
वह्नेर्व्विन्निम्बनिर्यासकविषमसिभिः सीसपट्टेऽंशुके वा
शावे पाषाणके वा विलिखतु मतिमान् काकपक्षेण यन्त्रम् ।
वल्मीके चत्वरे वा चततरुविवरे वा निदध्यादराति-
र्मृत्युं प्राप्नोति भूयादवयवविकलो व्याधितः पातितो वा ॥ ५६ ॥
चक्रे चाष्टाष्टपदे कालीं शिवयातुधानखण्डाद्याम् ।
यमदहनानिलवीतं विलिख्य विषदग्धिमर्कटीलिप्तम् ॥ ५७ ॥
जप्तमधोमुखमेतद्यन्त्रं यत्र तु देशे विनिचिक्षेन्मन्त्री ।
तत्रोपद्रवमखिलं दिनशः सर्व्वात्मना भवति ॥ ५८ ॥
खण्डेष्वेकाशीतिषु मध्येन्दुगसाध्य
जूंसः पूर्व्वादिकचतुःपङ्क्तिषु शेषम् ।
निव्याद्यर्क्षं शिष्टचतुष्पष्टिषु विद्या-
मीशाद्यं कव्यादिवा वाह्ये त्वरिताख्याम् ॥ ५९ ॥
दिग्दिक्संस्थमस्त्रपदादिवपडन्ता मेदोमालावेष्टितं विम्वम् ।
घटवीतं पद्मस्थं तत्पङ्कजराजद्वदनास्तं प्रोक्तं चक्रं मध्यग्रानुग्रहसंज्ञम् ॥ ६० ॥

श्री सा माया यामा सा श्री सा नो याज्ञे ज्ञेया नो सा ।
माया लीला लाली यामा याज्ञे लाली लीला ज्ञेया ॥ ६१ ॥

लाक्षाभिः कुङ्कुमैर्वा विलिखतु धवले चांशुके स्वर्णपट्टे
लेखन्या स्वर्णमय्या दृढमपि गुलिकीकृत्य सन्धारयेद्यः ।
कृत्यातो मृत्युतो वा ग्रहविपदुरितिभ्योऽपि मुक्तः सधन्यो
जीवेत् स्वैः पुत्रपौत्रैरपरिमितमहासम्पदा दीर्घकालम् ॥ ६२ ॥

चतुःपञ्चांशे वा क्रमविदथ लक्ष्मीमनुममुं
शिवाद्यं नैर्ऋत्यादिकमपि चतुर्णामितरतम् ।
बहिः स्वच्छे पट्टे कनकविहिते पूर्वविधिना
लिखित्वा जप्त्वा निक्षिपतु शितधीर्यत्र तदिदम् ॥ ६३ ॥

चक्रमनुग्रहसंज्ञं मन्त्री दिशेऽत्र सम्पदोऽविरतम् ।
शुभतरफलदायिन्यो भवन्ति शस्यर्द्धिकान्तदृष्ट्याद्याः ॥ ६४ ॥

हृद्वारे साध्यसंज्ञां विलिखतु तदथो कर्णिकायाश्च शिष्टा-
नष्टौ वर्णान् दलेष्वारचयतु हरमायां त्रिशो वेष्टयीत ।
कुम्भस्थं यन्त्रमेतत् सरसिजपुटितं सर्वरक्षाप्रसिद्धै
जप्तं सर्वोपसर्गप्रशमनफलदं श्रीकरं वश्यकारि ॥ ६५ ॥

इति निगदितकृत्या पूजयेत्तोतलाया
मनुमनुदिनमेनं मानयेन्मानवो यः ।
स तु जगति समग्रां सम्पदं प्राप्य देहा-
पदि मुदिततराया मुक्तभीर्मुक्तिमेति ॥ ६६ ॥

॥ इति तोतलाविधिः ॥

स्मरदीर्घोऽधरकाम्यौ दीर्घत्वक्षेमदद्रमान्तशिवाः ।
पभिन्नः शक्तिनिरुद्धो द्वादशवर्णोऽयमीरितो मन्त्रः ॥ ६७ ॥
द्वाभ्यामेकेन द्वाभ्यां द्वाभ्यां तथा पुनर्द्वाभ्याम् ।
मन्त्राक्षरैर्विदध्यादङ्गविधिं जातिसंयुतैर्मन्त्री ॥ ६८ ॥

इन्दुकलाकलितोज्ज्वलमौलिर्मारमदाकुलिताऽयुगनेत्रा ।
शोणितसिन्धुतरङ्गितपोतद्योतितभानुदलाम्बुजसंस्था ॥ ६८ ॥
दोर्धृतदाडिमसायकपाशा साङ्कुशचापकपालसमेता ।
शोणदुकूलविलेपनमाल्या शोणतरा भवतोऽवतु देवी ॥ ७० ॥
स्मृत्वा नित्यान्देवीमेवं प्रजपेन्मनुं शतसहस्रम् ।
अयुतं जुहुयादन्ते नृपतरुसमिधा घृतेन वा सिद्ध्यै ॥ ७१ ॥
शाक्ते पीठे पूज्या देवी कुसुमानुलेपनैररुणैः ।
स्वयमप्यलङ्कृताङ्गः सधूपदीपैर्निवेद्यताम्बूलैः ॥ ७२ ॥
हृल्लेखा क्लेदिनी नन्दा क्षोभणी मदनातुरा ।
निरञ्जना रागवती क्लिन्ना च मदनावती ॥ ७३ ॥
मेखला द्राविणी चैव तथान्या वेगवत्यपि ।
सस्मरा द्वादश प्रोक्ताः शक्तयः पत्रसंस्थिताः ॥ ७४ ॥
अङ्गैः शक्तिभिराभिर्मातृभिराशाधिपैः क्रमात् पूज्याः ।
भक्तिभरानतवपुषा भवभयभङ्गाय मन्त्रिणाऽहरहः ॥ ७५ ॥
दारिद्र्यरोगदुःखैर्दौर्भाग्यजरापमृत्युदोषैश्च ।
असपृष्टो निरपायो जीवति मन्त्री मर्जाचरं मनुजः ॥ ७६ ॥
इतीरिता लोकहिताय वश्यप्रस्तारिणी मन्दिरमिन्दिरायाः ।
या सर्व्वनारीनरराजवर्गसम्मोहिनी मोहनबाणभूता ॥ ७७ ॥
निद्रयोरन्तरापत्क्लिन्ने मदाः स्युश्च वै गिरः ।
मायादिकस्तथा वर्णहस्तैर्द्याङ्गविधिः स्मृतः ॥ ७८ ॥
रक्ता रक्ताङ्गरागांशुककुसुमविलेपादिका सेन्दुमौलिः
स्विद्यद्वक्त्रा मदविवशमाघूर्णितव्वीक्षणा च ।
दोर्भिः पाशाङ्कुशयुतकपालाभया पद्मसंस्था
देवी पायादमितफलदा नित्यशः पार्व्वती वः ॥ ७६ ॥
दीक्षितः प्रजपेल्लक्षं मनुमेनं हुनेत्ततः ।
मधूकपुष्पैः स्वाद्वक्तैरयुतं हविषाऽथवा ॥ ८० ॥

*

पीठं पूर्व्ववदभ्यर्च्य तत्रावाह्याभिपूजयेत् ।
अङ्गैश्च शक्तिभिर्लोकपालैर्देवीं समाहितः ॥ ८१ ॥
नित्या निरञ्जना क्लिन्ना क्लेदिनी मदनातुरा ।
मदद्रवा द्राविणी च द्रविणा शक्तयो मताः ॥ ८२ ॥

प्रजपेत् प्रमदां विचिन्त्य यां वा शयनस्थो मनुवित् सहस्रमानम् ।
निशि मारशिलीमुखाहताङ्गी न चिरात् सा मदविह्वला समेति ॥ ८३ ॥
नित्याभिः सदृशतरा न सन्ति लोके लक्ष्मीदा जगदनुरञ्जनाश्च मन्त्राः ।
तस्मात्ताः शुभमतयो भजन्तु नित्यं जापार्च्चाहुतसमुपासनाविशेषैः ॥ ८४ ॥

स्वर्णपट्टेऽथवा भूर्जे पाशबीजेन वेष्टयेत् ।
शक्तिबीजं साध्यनाम तन्मध्ये परिकल्पयेत् ॥ ८५ ॥
केसरेषु लिखेत् पाशशूलिबीजे प्रदक्षिणम् ।
मन्त्रवर्णांश्चनित्यादीन् दलमध्येषु वाह्यतः ॥ ८६ ॥
वृते स्वाहापदेनापि षोड़शाक्षरविद्यया ।
पाशाङ्कुशाख्यया पूर्व्वं प्रोक्तया वेष्टयेदपि ॥ ८७ ॥
एतद्यन्त्रं मदालिप्तं मृगमातङ्गयोः परम् ।
सर्व्वार्थसाधकं मूर्ध्नि करे वा विधृतं भवेत् ॥ ८८ ॥
षड्रसस्वरबाणानां बीजाद्यं शक्तिपाशयोः ।
सहस्रं प्रजपेदेनां विद्येशीं धीरमानसः ॥ ८९ ॥

॥ ० ॥ इति श्रीप्रपञ्चसारे त्रयोदशः पटलः ॥ ० ॥

---

# चतुर्दशः पटलः ।

अथ वक्ष्यामि दुर्गाया मन्त्रान् साङ्गान् सदैवतान् ।
सजपार्चाहुतविधीन् प्रीत्यर्थं मन्त्रजापिनाम् ॥ १ ॥
तारो मायाऽमरेशोऽद्रिपीठो बिन्दुसमन्वितः ।
स एव च विसर्गान्तो गायें नत्यन्तिको मनुः ॥ २ ॥
दुर्गास्य देवता छन्दो गायत्र नारदो मुनिः ।
तारो माया च दुर्गायै ह्रामाद्यन्ताङ्गकल्पना ॥ ३ ॥

शङ्खारिचापशरभिन्नकरा त्रिनेत्रा
तिग्मेतरांशुकलया विलसत्किरीटाम् ।
सिंहस्थिता सकलसिद्धनुताच दुर्गा
दूर्व्वानिभा दुरितवर्गहरा नमामि ॥ ४ ॥

कृताभिषेकदीक्षस्तु वसुलक्ष जपेन्मनुम् ।
तदन्ते जुहुयात् सर्पि सयुतेन पयोन्धसा ॥ ५ ॥
अष्टसाहस्रसख्येन तिलैर्व्वा मधुराप्लुतैः ।
पीठार्चाया प्रयष्टव्या. क्रमात्तच्छक्तयो नव ॥ ६ ॥
प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी तथा ।
सुप्रभा विजया सर्व्वसिद्धिदा नवमी तथा ॥ ७ ॥
अर्च्या ह्रस्वत्रयक्लीवरहितैश्च स्वरैरिमाः ।
तारान्ते वज्रमाभाय नखदंष्ट्रायुधाय च ॥ ८ ॥
महासिंहाय चेत्युक्ता वर्म्मास्त्रनतय. क्रमात् ।
सिद्धमन्त्रोऽयमित्येवं सम्प्रोक्ता पीठकल्पना ॥ ९ ॥
अङ्गैः स्यादावृतिः पूर्व्वा द्वितीया शक्तिभि. स्मृता ।
षटायुधैस्तृतीया स्याल्लोकपालैश्चतुर्थ्यपि ॥ १० ॥

तदायुधैः पञ्चमी च दुर्गायजनमीदृशम् ।
जया च विजया कीर्त्तिः प्रीतिश्चाथ प्रभाह्वया ॥ ११ ॥
श्रद्धा मेधा स्मृतिरपि शक्तयः स्वाक्षरादिकाः ।
चक्रशङ्खगदाखड्गपाशाङ्कुशशरा धनुः ॥ १२ ॥
क्रमादष्टायुधाः प्रोक्ता दौर्गा दुर्गतिहारिणः ।
इत्थं दुर्गामनौ जापहुतार्चाभिः प्रसाधिते ॥ १३ ॥
मन्त्री न्दिरावान् भवति दीर्घायुर्दुरितान् जयेत् ।
यान् यानिच्छति कामान् स तांस्तानाप्नोत्ययत्नतः ॥ १४ ॥
विधाय विधिना तेन कलशन्त्वभिषेचयेत् ।
यमसौ भूतवेतालपिशाचाद्यैर्व्विमुच्यते ।
राजाभिषिक्तो विधिना सपत्नानमुना जयेत् ॥ १५ ॥

अमुना विधिना कृताभिषेका ललना पुत्रमवाप्नुयाद्विनीतम् ।
हवनात्तिलसर्षपैः सहस्रद्वितयैराशु भवेच्च गर्भरक्षा ॥ १६ ॥
अनयैव जपाभिषेकहोमक्रियया स्यादनुरञ्जनं जनानाम् ।
भजतां सकलार्थसाधनार्थं मुनिवर्य्यैः परिकल्पितोऽयमादौ ॥ १७ ॥
उत्तिष्ठपदं प्रथमं पुनरपि ततः किं पदं स्वपिषि युतम् ।
भयमपि मेऽन्ते समुपस्थितमित्युच्चार्य्य यदि पदं प्रवदेत् ॥ १८ ॥
शक्यमशक्यं वोक्त्वा तन्मे भगवति निगद्य शमयपदम् ।
प्रोक्ता ठद्वितययुतं सप्तत्रिंशाक्षरो मनुः प्रोक्तः ॥ १९ ॥
आरण्यकोऽस्यनुष्टुप्छन्दुर्गाख्याः क्रमेण भगवत्याः ।
ऋष्यादिकाः स्वमनुना विहितान्यङ्गानि वाक्यभिन्नेन ॥ २० ॥
षड्भिश्चतुर्भिरष्टभिरष्टार्णैः षड्भिरपि च पञ्चार्णैः ।
जातियुतैश्च विदध्यादङ्गान्यपि षट् क्रमेण विशदमतिः ॥ २१ ॥
पदयसन्धिगुदान्धुवच्याधारोदरपार्श्वहृत्स्तनेषु गले ।
दोःसन्धिवदननासाकपोलदृक्कर्णयुग्मके न्यस्येत् ॥ २२ ॥

# चतुर्दशः पटलः ।

अथ वक्ष्यामि दुर्गाया मन्त्रान् साङ्गान् सदैवतान् ।
सजपार्चाहुतविधीन् प्रीत्यर्थं मन्त्रजापिनाम् ॥ १ ॥
तारो मायाऽमरेशोऽद्रिपीठो विन्दुसमन्वितः ।
स एव च विसर्गान्तो गायै नत्यन्तिको मनुः ॥ २ ॥
दुर्गाऽस्य देवता छन्दो गायत्रं नारदो मुनिः ।
तारो माया च दुर्गायै ह्रामाद्यन्ताङ्गकल्पना ॥ ३ ॥

शङ्खारिचापशरभिन्नकरा त्रिनेत्रां
तिग्मेतरांशुकलया विलसत्किरीटाम् ।
सिंहस्थितां सकलसिद्धनुतां च दुर्गां
दूर्वानिभां दुरितवर्गहरां नमामि ॥ ४ ॥

कृताभिषेकदीक्षस्तु वसुलक्षं जपेन्मनुम् ।
तदन्ते जुहुयात् सर्पिःसंयुतेन पयोन्धसा ॥ ५ ॥
अष्टसाहस्रसंख्येन तिलैर्वा मधुराप्लुतैः ।
पीठार्चायां प्रयष्टव्याः क्रमात्तच्छक्तयो नव ॥ ६ ॥
प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी तथा ।
सुप्रभा विजया सर्वसिद्धिदा नवमी तथा ॥ ७ ॥
अर्चा फ्रस्त्रयक्लीवरहितैश्च स्वरैरिमाः ।
तारान्ते वज्रमाभाष्य नखदंष्ट्रायुधाय च ॥ ८ ॥
महासिंहाय चेत्युक्त्वा वर्म्मास्त्रनतयः क्रमात् ।
सिंहमन्त्रोऽयमित्येवं सम्प्रोक्ता पीठकल्पना ॥ ९ ॥
अङ्गैः स्यादावृतिः पूर्वा द्वितीया शक्तिभिः स्मृता ।
चटायुधैस्तृतीया स्याल्लोकपालैश्चतुर्थ्यपि ॥ १० ॥

तदायुधैः पञ्चमी च दुर्गायजनमीदृशम् ।
जया च विजया कीर्त्तिः प्रीतिश्चाथ प्रभाह्वया ॥ ११ ॥
श्रद्धा मेधा श्रुतिरपि शक्तयः स्वाचरादिकाः ।
चक्रशङ्खगदाखड्गपाशाङ्कुशशरा धनुः ॥ १२ ॥
क्रमादष्टायुधाः प्रोक्ता दीर्गा दुर्गतिहारिणः ।
इत्थं दुर्गामनौ जापहुतार्चाभिः प्रसाधिते ॥ १३ ॥
मन्त्रीन्दिरावान् भवति दीर्घायुर्दुरितान् जयेत् ।
यान् यानिच्छति कामान् स तांस्तानाप्नोत्ययत्नतः ॥ १४ ॥
विधाय विधिना तेन कलशन्त्वभिषेचयेत् ।
यमसौ भूतवेतालपिशाचाद्यैर्विमुच्यते ।
राजाभिषिक्तो विधिना सपत्नानमुना जयेत् ॥ १५ ॥
अमुना विधिना कृताभिषेका ललना पुत्रमवाप्नुयाद्विनीतम् ।
हवनात्तिलसर्षपैः सहस्रद्वितयैराशु भवेच्च गर्भरक्षा ॥ १६ ॥
अनयैव जपाभिषेकहोमक्रियया स्यादनुरञ्जनं जनानाम् ।
भजतां सकलार्थसाधनार्थं मुनिवर्य्यैः परिकल्पितोऽयमादौ ॥ १७ ॥
उत्तिष्ठपदं प्रथमं पुरुषि ततः किं पदं स्वपिषि युतम् ।
भयमपि मेऽन्ते समुपस्थितमित्युच्चार्य्य यदि पदं प्रवदेत् ॥ १८ ॥
शक्यमशक्यं वोक्ता तन्मे भगवति निगद्य शमयपदम् ।
प्रोक्ता ठद्वितययुतं सप्तविंशाक्षरो मनुः प्रोक्तः ॥ १९ ॥
आरण्यकोऽस्यनुष्टुप्वनदुर्गाख्याः क्रमेण भगवत्याः ।
ऋष्यादिकाः स्वमनुना विहितान्यङ्गानि वाक्यभिन्नेन ॥ २० ॥
षड्भिश्चतुर्भिरष्टभिरष्टार्णैः षड्भिरपि च पञ्चार्णैः ।
जातियुतैश्च विदध्यादङ्गान्यपि षट् क्रमेण विशदमतिः ॥ २१ ॥
पद्द्वयसन्धिगुदाम्बुत्वङ्नाभ्याधारोदरपार्श्वहृत्स्तनेषु गले ।
दोःसन्धिवदननासाकपोलदृक्कर्णयुग्भुके न्यस्येत् ॥ २२ ॥

हेमप्रख्यामिन्दुखण्डात्तमौलिं शङ्खारीष्टाभीतिहस्तां त्रिनेत्राम् ।
हेमाजस्थां पीतवस्त्रां प्रसन्नां देवीं दुर्गां दिव्यरूपां नमामि ॥ २३ ॥
अरिशङ्खकृपाणखेटबाणान् सधनुःशूलकतर्ज्जनीर्दधाना ।
भवतां महिषोत्तमाङ्गसंस्था नवदूर्व्वासदृशी श्रियेऽस्तु दुर्गा ॥ २४ ॥
चक्रदरखड्गखेटकशरकार्म्मुकशूलसंज्ञककपालैः ।
ऋष्टिमुसलकुन्तनन्दकवलयगदाभिन्दिपालशक्त्याख्यैः ॥ २५ ॥
उद्यद्विंशतिभुजाढ्या माहिषके सजलजलदसङ्काशा ।
सिंहस्था वाऽग्निनिभा पद्मस्था चाथ मरकतश्यामा ॥ २६ ॥
व्याघ्रत्वक्परिधाना सर्व्वाभरणान्विता त्रिनेत्रा च ।
अहिकलितनीलकुञ्चितकुन्तलविलसत्किरीटशशिशकला ॥ २७ ॥
सर्पमयवलयनूपुरकाञ्चीकेयूरहारसम्भिन्ना ।
सुरदितिजाभयभयदा ध्येया कात्यायनी प्रयोगविधौ ॥ २८ ॥
संयतचित्तो लक्षचतुष्कं जप्त्वा हुनेद्दशांशेन ।
व्रीहितिलाज्यहविर्भिः सम्यक् संचिन्त्य भगवतीमनले ॥ २९ ॥
पीठे पूर्व्वप्रोक्ते पूज्याङ्गैः शक्तिभिस्तथाष्टाभिः ।
अष्टायुधैश्च मातृभिराशेशैः क्रमश एव दुर्गेयम् ॥ ३० ॥
आर्य्या दुर्गा भद्रा सभद्रकाली तथाम्बिकाख्या च ।
क्षेमा सवेदगर्भा क्षेमङ्करी चेति शक्तयः प्रोक्ताः ॥ ३१ ॥
अरिदरकृपाणखेटकबाणधनु:शूलपाण्डर(१)कपालाः ।
अष्टायुधाः क्रमेणोक्ताः पूर्व्वविधानवदथोदितं शेषम् ॥ ३२ ॥
इत्थ जपार्च्चनाहुतसिद्धमनोर्मन्त्रिणः प्रयोगविधिः ।
विहितो जपः प्रतिदिनं निजरक्षायै शतं सहस्रं वा ॥ ३३ ॥
उद्दिश्य यद्यदेनं मनुं जपेदथ सहस्रमयुतं वा ।
तत्तन्मन्त्री लभतेऽचिरात्तदनुग्रहादसाध्यमपि ॥ ३४ ॥

---

(१) 'पाण्डर' स्थाने "चक्र" इति पाठान्तरम् ।

स्नात्वार्काभिमुखः सन्नाभिसमकेऽम्भसि स्थितो मन्त्री।
अष्टोर्द्धंशतं प्रजपेन्निजवाञ्छितसिद्धये च लक्ष्मेर च ॥ ३५ ॥
ध्यात्वा त्रिशूलहस्ता ज्वरसर्पग्रहविपत्सु जन्तूनाम्।
संस्पृश्य शिरसि जप्यात्तर्व्वान्योपद्रवं द्रुत (१) शमयेत् ॥ ३६ ॥
अयुतं तिलैर्वनोत्थै राजीभिर्वा हुनेत् समिद्भिर्वा।
मायूरकीभिरचिरात्तापस्मारादिकांश्च नाशयति ॥ ३७ ॥
जुहुयाद्रोहिणसमिधामयुतं मन्त्री पुनः सशङ्खानाम्।
सर्व्वापदां विमुक्त्यै सर्व्वसमृद्ध्यै ग्रहादिशान्त्यै च ॥ ३८ ॥
भार्क्कैः समित्सहस्रैः प्रतिजुहुयादर्कवारमारभ्य।
दशदिनतोऽस्त्वीग्वाञ्छितसिद्धिर्द्देव्याः प्रसादतो भवति ॥ ३९ ॥
शुद्धैः सारैस्त्रिशैस्त्रिदिनं वा सप्तरात्रकं वापि।
प्रतिशयकर्न्न प्रतिजुहुयान्मनुना निजवाञ्छिताप्तये मन्त्री ॥ ४० ॥
विशिखानां त्रिंशत्कं पुरो निधायाथ तीक्ष्णतैलेन।
जुहुयात् सहस्रकं वाऽयुतमपि संख्यासु पूरितासु पुनः ॥ ४१ ॥
सम्पातिततैलेन च शरान् समभ्युक्ष्य पूर्व्ववज्जुहुयात् (२)।
तानथ शूरो धन्वी युद्धाचारः प्रवेशये(३)द्वाणान् ॥ ४२ ॥
प्रतिसेनाया मध्ये सा धावति सद्य एव मध्यात्मा।
भूयो गुरुं धनैरपि धान्यैः परिपूजयेच्च कारयिता ॥ ४३ ॥
अष्टोत्तरशतजप्तं यष्टिरसि प्रक्षिपेच्चिताभस्म।
स तु विद्विष्टो लोकैर्ग्रामाद्ग्रामान्तरं परिभ्रमति ॥ ४४ ॥
कारस्करस्य पत्रैरष्टसहस्रैर्निशातितैर्मनुना।
जुहुयात् सपादपांशुभिरुच्चाटकरं भवेद्रिपोः सद्यः ॥ ४५ ॥
सेनां सम्स्तम्भयितुं विधातवसुमनःसहस्रकं जुहुयात्।
तावद्भिस्तत्पत्रैर्मन्त्री सेनां निवर्त्तयति ॥ ४६ ॥

---

(१) पुस्तकान्तरे "द्रुतम" इति पाठो न दृश्यते।
(२) "समभ्युक्ष्य पूर्व्ववज्जुहुयात्" इति पाठान्तरम्। (३) "प्रवेशयेत्" इति पाठान्तरम्।

विषतरुसमयोश्च गवो: प्रतिकृतिमसकृत्प्रतिष्ठितप्राणाम् ।
छित्वा छित्वा काकोलूकवसाक्तैः सहस्रमष्टौ च ॥ ४७ ॥
असितचतुर्दश्यां तद्वार्वेर्जुहुयादरण्यकेऽर्द्धनिशि ।
विचतुर्दशीं प्रयोगादर्व्वाङ्म्रियते रिपुर्न सन्देहः ॥ ४८ ॥
स्वयसारक्लोपेतैर्जुहुयात्पक्षैरुलूकवायसयोः ।
म्रियतेऽरातिर्मत्तः स्यादुन्मत्तसमिल्सहस्रहोमेन ॥ ४९ ॥
संस्थापितानिलान्तां प्रतिकृतिमुष्णोदके विनिःक्षिप्य ।
प्रजपेदुन्मादः स्याच्छवोर्दुग्धाभिषेकतः शान्तिः ॥ ५० ॥
रविबिम्बगतामरुणां करयुगपरिक्लृप्तशूलतर्जनिकाम् ।
ध्यात्वाऽयुतं प्रजप्यामारयितुं यद्यएव रिपुनिवहम् ॥ ५१ ॥
असिखेटकरार्कस्था क्रुद्धा मारयति सैव जपविधिना ।
सिंहस्था बाणधनुःकरा समुच्चाटयेदरीनचिरात् ॥ ५२ ॥
विषतरुसमिदयुतहुतादथ करिणो रोगिणो भवन्त्यचिरात् ।
तत्पर्णैश्च विनाशस्तेषामुच्चाटनञ्च तत्पुष्पैः ॥ ५३ ॥
आनित्यकसमिद्धोमाद्रोगा नश्यन्ति दन्तिनामचिरात् ।
तत्पुष्पैर्मधुराक्तैर्होमाच्च वशीभवन्ति मातङ्गाः ॥ ५४ ॥
त्रिमधुरयुतैरानित्यकपत्रैर्मत्ता भवन्ति ते सद्यः ।
रक्षाकरस्तु करिणां तज्जापितपञ्चगव्यलेपः स्यात् ॥ ५५ ॥
आज्यतिलराज्यानित्यकदुग्धौदनपञ्चगव्यतण्डुलकैः ।
सघृतैश्च प्रत्येकं सहस्रहवनङ्गजाश्ववर्द्धनकृत् ॥ ५६ ॥
द्विजभूरुहं महान्तं छित्त्वा निर्भिद्य पञ्चधा भूयः ।
भागाक्रमेण पञ्चायुधा विधेयाश्च साधु शिल्पविदा ॥ ५७ ॥
शङ्ख. सनन्दकोऽरिः शार्ङ्गः कौमोदकी दिशां क्रमशः ।
पञ्चेति पञ्चगव्ये निधाय जप्याच्च पञ्चसाहस्रम् ॥ ५८ ॥
तावद्घृतेन जुहुयात्सेच्य सम्पात्य साधु सम्पातम् ।
पुनरपि तावज्जप्त्वा मध्यात्ववटेषु पञ्चगव्ययुतम् ॥ ५९ ॥

संस्थाप्य समीक्षत्य च बलिं हरेत्तत्र तत्र तन्मन्त्रैः ।
पुरराष्ट्रग्रामाणां कार्य्या रक्षैवमेव मन्त्रविदा ॥ ६० ॥
यस्मिन् देशे विहिता रक्षेयं तत्र वर्द्धते लक्ष्मीः ।
धनधान्यसमृद्धिः स्याद्रिपुचोराद्याश्च नैव बाधन्ते ॥ ६१ ॥
पद्मोत्पलकुमुदहुतैर्नृपपत्नीर्ब्राह्मणान् वशीकुरुते ।
कह्लारलवणहोमैर्विट्शूद्रौ जातिभिस्तथा ग्रामम् ॥ ६२ ॥
अथ वारिदरगदाम्बुजकरं मुकुन्दं विचिन्त्य रविबिम्बे ।
व्यत्यस्तपुरुषभगवत्पदं मनुं भजतु सर्व्वसिद्धिकरम् ॥ ६३ ॥
साध्याख्याक्षरगर्भितं मनुमिमं पत्रे लिखित्वा च त-
च्चक्रो हस्तमृदा कृतप्रतिकृतेर्विन्यस्य मन्त्री हृदि ।
सम्पाद्दन्वय पुत्तलीमभिमुखे संस्थाप्य सन्ध्यात्रये
जप्यादष्टशतं चिराय वशतां गच्छत्यसौ निश्चयः ॥ ६४ ॥
व्रीहीणां जुहुयान्नरोऽष्टशतकं संवत्सराद्व्रीहिमान्
गोदुग्धैः पशुमान् घृतैः कनकवान् दध्ना च सर्व्वर्द्धिमान् ।
अन्नैरन्नसमृद्धिमांश्च मधुभिः स्याद्रत्नवान् दूर्व्वया-
प्यायुष्मान् प्रतिपद्ममेजेन महतीं सद्यः श्रियं प्राप्नुयात् ॥ ६५ ॥
छान्तं मरुच्च रसवर्णयुतं (१) सवाद्य
सवीप्सा शूलिनिपदश्च सदुष्टशब्दम् ।
पश्चान्तकं सदहनं परिभाष्य हान्त
हुं फट् द्विठान्तमिति शूलिनिमन्त्रमेव ॥ ६६ ॥
ऋषिर्दीर्घतपाश्छन्दः ककुब्दुर्गा च देवता ।
दुर्गा हृदवरदा शीर्षं शिखा स्याद्विन्ध्यवासिनी ॥ ६७ ॥
वर्म्माऽसुरमर्द्दिनि च युद्धपूर्व्वप्रिये तथा ।
त्रासयद्वितयञ्चास्त्रं देवसिद्धसुपूजिते ॥ ६८ ॥

---

(१) "विषवर्णयुतम्" इति पाठान्तरम् ।

नन्दिन्यस्मै रक्षयुगं महायोगीश्वरीति च ।
शूलिन्याद्यञ्च पञ्चाङ्गं हुं फडन्तमितीरितम्
षडङ्गकर्मैव रक्षाकृत् प्रोक्तं ग्रहनिवारणम् ॥ ६८ ॥
बिभ्राणा शूलबाणास्यरिसदरगदा चापपाशान् कराब्जै-
र्मेघश्यामा किरीटोल्लसितशशिकलाभीषणा भूषणाढ्या ।
सिंहस्कन्धाधिरूढा चतसृभिरसिखेटान्विताभिः परीता
कन्याभिर्भिन्नदैत्या भवतु भवभयध्वंसिनी शूलिनी वः ॥ ७० ॥
एवं विचिन्त्य पुनरष्टलक्षमेनं मन्त्री जपन् प्रजुहुयाच्च दशांशतोऽन्ते ।
प्राज्येन साज्यहविषा प्रयजेच्च देवीमङ्गाष्टशक्तिनिजहेतिदिशाधिनाथैः ॥ ७१ ॥
दुर्गा च वरदा विन्ध्यवासिन्यसुरमर्दिनी ।
युद्धप्रिया वेदसिद्धपूजिता नन्दिनी तथा ॥ ७२ ॥
महायोगीश्वरी चाष्ट शक्तयः समुदीरिताः ।
रथाङ्गशङ्खासिगदाबाणकार्मुकसंज्ञकाः ॥ ७३ ॥
सशूलपाशा यष्टव्या दिक्क्रमादष्ट हेतयः ।
दीक्षाजपहुतार्चाभिः सिद्धः कर्म समाचरेत् ।
आमयोन्मादभूतापस्मारक्ष्वेलशमादिकम् ॥ ७४ ॥
उद्गूर्णैः प्रहरणकैरुदीर्णवेगैः शूलाद्यैर्निजमय शूलिनीं विचिन्त्य ।
आविश्य क्षणमिव जप्यमानमन्त्रस्याहत्या द्रुतमपयान्ति भूतसङ्घाः ॥ ७५ ॥
अन्तराय पुनरात्मरोगिणोरम्बिकामपि निजायुधाकुलाम् ।
संविचिन्त्य जपतोऽरिमुद्रया विद्रवन्त्यवशविग्रहा ग्रहाः ॥ ७६ ॥
अहिमूषिकहयिकादिजं वा बहुपात्कुक्कुरलूतिकोद्भवं वा ।
विषमाशु विनाशयेन्नराणां प्रतिपत्त्यैव (१) च विन्ध्यवासिनी सा ॥७७॥
आधाय वापि निशिते च देवीमेमद्धरीमन्त्रमिमं जपित्वा ।
तद्वेधनादेव विपक्षसेना दिशो दिशो धावति (२) नष्टसंज्ञा (३) ॥७८

---

(१) "प्रतिपत्त्यैव" इति पाठान्तरम् ।
(२) "नष्टचेष्टा" इति पाठान्तरम् ।

आत्मानमार्य्यां प्रतिपद्य शूलपाशान्वितां वैरिबलं प्रविश्य ।
मन्त्रं जपन्नाशु परायुधानि गृह्णाति मुष्णाति च बोधमेषाम् ॥ ७९ ॥
तिलसिद्धार्थैर्जुहुयाल्लक्षं मन्त्री सपत्ननामयुतम् ।
स तु रोगाभिहतात्मा मृतिमेति न तत्र सन्देहः ॥ ८० ॥
त्रिमधुरसिक्तैश्च तिलैरष्टसहस्रं जुहोति योऽनुदिनम् ।
अप्रतिहतास्य शक्तिर्भूयात् प्रागेव वत्सरतः ॥ ८१ ॥
सर्पिषाष्टशतहोमतोऽमुना वाञ्छितं सकलमञ्जसा भवेत् ।
दूर्व्वया त्रिकयुजेप्सितं लभेत् सम्यगष्टशतसंख्यया हुतात् ॥ ८२ ॥
छुरिकाकृपाणनखरा मन्त्रेणानेन साधु संजप्ताः ।
सम्पाताज्यसुसिक्ता अप्रतिहतशक्तयो भवन्ति युधि ॥ ८३ ॥
गोमयविहितां गुलिका जुहुयाच्छतमष्टपूर्व्वकं मन्त्री ।
दिवसैः सप्तभिरिष्टौ द्विष्टौ मिथो वियोगिनौ भवतः ॥ ८४ ॥
अस्तृष्टकं गोमयमन्तरिक्षे संगृह्य जप्ता त्रिसहस्रमानम् ।
यियासतां वै निखनेन्नराणां संस्तम्भनं द्वारि चमूमुखे च ॥ ८५ ॥
पानीयान्तःपाणिमार्य्यां प्रसन्नां ध्यात्वा ग्रामं वा पुरं वापि गच्छन् ।
जप्त्वा मन्त्रं तर्पयित्वा प्रविष्टो मृष्टं भोज्यं प्राप्नुयाद्भक्ष्यवर्गैः ॥ ८६ ॥

आर्कैर्मन्त्री त्रिमधुरयुतैरेकसाहस्रमिध्मै-(१)
राश्वत्थैर्व्वा त्वतिविशदचेतास्तिलैर्व्वा जुहोति ।
यानुद्दिश्य त्वहितमनास्तन्मयः सम्यगग्नौ
ते वश्याः स्युर्व्विधुरितधियो नात्र कार्य्यो विचारः ॥ ८७ ॥

कुर्य्यात् प्रयोगानपि दावदुर्गाकल्पोदितान् वै मनुनाऽमुना च ।
मन्त्री जपार्चाहुततर्पणान्ता(२)न्नान्यो हि मन्त्रोरनयोर्व्विशेषः ॥ ८८ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे चतुर्दशः पटलः ॥ * ॥

---

(१) "एकसाहस्रम्" इत्यत्र "अर्कसाहस्रम्" इति पाठान्तरम् ।
(२) "तर्पणाद्या नान्यो हि" इति पाठान्तरम् ।

## पञ्चदशः पटलः ।

अथ कथयिष्ये मन्त्रं चतुरक्षरसंज्ञकं समासेन ।
प्रणवो भुवनाधीशादण्डिखमस्यादिको विसर्गान्तः ॥ १ ॥
ऋषिरस्याऽजश्छन्दो गायत्रञ्च देवता च भुवनेशी ।
अङ्गानि षट् क्रमेण प्रोक्तानि प्रणवशक्तिबीजाभ्याम् ॥ २ ॥
भास्वद्रत्नौघमौलिस्फुरदमृतरुचो रञ्जयच्चारुरेखां (१)
सद्यः सन्नद्धकार्त्तस्वरकमलजवाभासुराभिः प्रभाभिः ।
विश्वाकाशावकाशं ज्वलयदधिगिरं धर्त्तृ पाशाङ्कुशेष्टा-
भीतीना भक्तितुङ्गस्तनमवतु जगत् मातुरार्कं वपुर्व्वः ॥ ३ ॥
संदीक्षितोऽथ प्रजपेच्च मन्त्रं मन्त्री पुनर्लक्षचतुष्कमेनम् ।
पुष्पैस्तदन्ते द्विजवृक्षजातैः स्वादुप्लुतैर्व्वा जुहुयात् सरोजैः ॥ ४ ॥
मनोरथार्कोन्नतया लतेन प्रवर्त्यतेऽर्घ्योपहिता प्रपूजा ।
समे सुमृष्टे रचयेद्विविक्ते शुद्धे तले स्थण्डिलमङ्गणस्य ॥ ५ ॥
प्रयजेदथ प्रभूतां विमलां साराह्वया समाराध्याम् ।
परमसुखामन्यादिष्वस्त्रिषु मध्ये च पीठक्लृप्तेः प्राक् ॥ ६ ॥
क्रमस्वरयक्लीवविवियोजिताभिः क्रमात् क्षशान् विन्दुयुताभिरज्भिः ।
सहाभिपूज्या नव शक्तयः स्युः प्रद्योतनाः प्राज्यतरप्रभावाः ॥ ७ ॥
दीप्ता सूक्ष्मा जया भद्रा विभूतिर्व्विमला तथा ।
अमोघा विद्युता चैव नवमी सर्व्वतोमुखी ॥ ८ ॥
ब्रह्मविष्णुशिवात्मक समीर्थ्य सौराय योगपीठाय ।
प्रोक्तेति नतिमपि पुनः समापयेत् पीठमन्त्रमहिमरुचेः ॥ ९ ॥

(१) "व्यञ्जयच्चारुरेखाम्" इति पाठान्तरम् ।

आवाह्य हार्लेखिकमर्कमर्घ्यपाद्याचमाद्यैर्मधुपर्कयुक्तैः ।
प्रपूजयेदावरणैः समस्तसम्पत्त्यवाप्त्यै तदधीनचेताः ॥ १० ॥
हृल्लेखाद्याः पञ्च यष्टव्यास्त्वङ्गै (१) स्तदनु मातृभिः पश्चात् ।
अङ्गाराद्यैराशापालैरभ्यर्चयेत् क्रमान्मन्त्री ॥ ११ ॥
प्रतिपूज्यशक्तिमिति तत्र पुरः प्रणिधाय (२) ताम्ररचितं चषकम् ।
प्रजपन्मनुं प्रतिगतक्रमतः परिपूरयेत् सुविमलैः सलिलैः ॥ १२ ॥
अक्षतयवकुशदूर्वातिलसर्षपकुसुमचन्दनोपेतैः ।
अस्त्रयाद्यक्षिप्टं स्वैक्यं सम्भावयन् समाहितधीः ॥ १३ ॥
दृष्ट्वा दिनेशमथ पीठगतं तथैव
व्योमस्थितं परिवृतावरणं विलोक्य ।
अष्टोत्तरं शतमथ प्रजपेन्मनुन्तं
पूर्णोदकं निजकरेण विधाय पात्रम् ॥ १४ ॥
भूयोऽभ्यर्च्य सुधामयं जलमथो तद्गन्धपुष्पादिभि
र्जानुभ्यामवनिं गतश्चषकमभ्यामस्तकं प्रोद्धरन् ।
दद्यान्मण्डलवद्दृष्टिहृदयो भक्त्यार्घ्यमोजोबल-
ज्योतिर्दीप्तियशोधृतिस्मृतिकरं (३) लक्ष्मीप्रदं भास्वते ॥ १५ ॥
अथ कृतपुष्पाञ्जलिरपि पुनरष्टशतं जपेन्मनुमिमं मन्त्री ।
यावद्रश्मिषु भानोर्व्याप्नोत्यम्भः (४) सुधामयं तदपि ॥ १६ ॥
अमृतमयजलावसिक्तगात्रो दिनपतिरप्यमृतत्वमातनोति ।
धनविभवसुदारपुत्रमित्रपशुगणजुष्टमनन्तभोगयोगि ॥ १७ ॥
तस्मादिनाय दिनशो ददताद्दिनादौ दैन्यापनोदितनवे दिनवल्लभाय ।
अर्घ्यं समग्रविभवस्त्वथवार्कवारे पारं स गच्छति भवाद्व्यथवारिराशेः ॥१८॥

---

(१) "हृल्लेखाद्यैः पञ्चभिरिद्धाङ्गैः" इति पाठान्तरम् ।
(२) "प्रविधाय" इति पाठान्तरम् ।
(३) "ज्योतिर्दीप्तियशोऽखिलस्फूर्तिकरम्" इति वा पाठः ।
(४) "प्राप्नोत्यम्बु" इति पाठान्तरम् ।

अनुदिनमर्चयितव्यं पुंसां विधिनाऽमुनाथवा रवौ ।
दद्यादर्घ्यद्वयमपि कुर्याद्वाञ्छितार्थसमवाप्त्यै ॥ १९ ॥

एकीकृत्य समस्तवस्त्वनुगतानादित्यचन्द्रानलान्
वेदाद्येन गुणात्मकेन सगुणानाकृष्य हृल्लेखया ।
सर्वं तत्प्रतिमथ्यतामपि समावष्टभ्य हंसात्मना
नित्यं शुद्धमनन्यमक्षरपदं मन्त्री भवेद्योगतः ॥ २० ॥

अथ वदाम्यजपामनुमुत्तमं सकलसंसृतियापनसाधनम् ।
दुरितरोगविषापहरं नृणामिह परत्र च वाञ्छितसिद्धिदम् ॥ २१ ॥
विष्णुपदं मसुधाकरखण्डं चन्द्रयुगावधिकं वतुरीयम् ।
चैत्रविटो मनुरेष मसुक्तो यं प्रजपत्यपि सन्ततमात्मा ॥ २२ ॥
ऋष्याद्या ब्रह्मदेव्यादिगायत्रीपरमात्मकाः ।
हमाऽक्षीवकलादीर्घयुजाऽङ्गानि समाचरेत् ॥ २३ ॥

अरुणकनकवर्णं पद्मसंस्थञ्च गौरी-
हरनियमितचिह्नं सौम्यतानूनपातम् ।
भवतु भवदभीष्टप्राप्तये पाशटङ्का-
भयवरदविचित्रं रूपमर्द्धाम्बिकेशम् ॥ २४ ॥

प्रजपेद्दादशलक्षं मनुमिममाज्यान्वितैश्च दौग्धान्नैः ।
तावत् सहस्रमानं जुहुयात् शैवे समर्चनापीठे ॥ २५ ॥
निक्षिप्य कलशमस्मिन् पूर्वोक्तानामपामथैकेन ।
आपूर्य चोपचर्य च विहानङ्गैः प्रपूजयेत् पूर्व्वम् ॥ २६ ॥
ऋतवसुवरनरसंख्यामूर्त्युग्रोवह्निपूर्व्विकाजाल्याः ।
नागोपागाख्येयास्ततो दिशापास्तताय वज्राद्याः ॥ २७ ॥
इति परिपूज्य च कलशं पुनरभिषिच्याय नियमतोऽर्घ्यमपि ।
दद्याद्दिनाय चैहिकपारत्रिकसिद्धये चिरं मन्त्री ॥ २८ ॥
इन्दुदयोदितसुधारसपूर्णमार्गसंस्रवद्विन्दुसुसमेधितमादिबीजम् ।
संचिन्त्य यो मनुमिमं भजते मनस्वी स्यात्मैकपतोऽयं दुरितैः प्रतिमुच्यतेऽसौ ॥२९॥

स्वच्छो मुमुक्षोस्तु भवेदघोरः काम्यक्रियायामपि रक्तवर्णः ।
कृष्णोऽभिचारे ग्रहवैकृते च प्रोक्तो जपः स्यादपि लक्षमानः ॥ १९ ॥
घृतावसिक्तैस्तिलतण्डुलैश्च जपावसाने जुहुयाद्दशांशम् ।
घृतप्लुतैर्व्वाथ हविर्भिरेव तावत्प्रजुह्वन् समुपैति कामान् ॥ २० ॥
हृल्लेखास्थितसाध्याक्षरविलसत्कर्णिकं कलावीतम् ।
वर्गाष्टकान्तकेसरमन्ते सहलक्षयाक्षरोल्लसितम् ॥ २१ ॥
मन्त्राक्षरत्रयोद्यद्दलमध्यदलाग्रकश्च तद्बाह्ये ।
वह्निपुटाश्रिसमाश्रितकवचास्त्रं प्रतिविलिख्य यन्त्रमिदम् ॥ २२ ॥
कृत्वा समाप्य मण्डलमत्र विनिःक्षिप्य पूरयेत् कलशम् ।
पीठे पिनाकपाणेर्गव्यैर्व्वा क्वाथकृततोयैर्व्वा ॥ २३ ॥

अङ्गावृतेरनु च हेतिभिरीरिताभिः
पश्चाच्च मातृभिरथापि दिशाधिनाथैः ।
संपूजयीत विधिनेति षडक्षरोत्थ-
मार्गेण वा मनुपरिस्फुरणाय मन्त्री ॥ २४ ॥

आज्यापामार्गसमित्तिलसर्षपसाज्यकैश्च पृथक् ।
रात्रौ सहस्रहोमाद्भूतापस्मारादिशान्तिरुद्दिष्टा ॥ २५ ॥
सितकिंशुकनिर्गुण्डीकनकापामार्गजन्मनां समिधाम् ।
पृथगपि सहस्रहोमाद्विग्रहमोक्षोऽचिराद्ग्रहाणां स्यात् ॥ २६ ॥
गव्याक्तैर्जुहुयात् पृथग्दशशतं मन्त्री मयूरैश्चकै-
र्भूयस्तैः प्रतिभोजयेत् प्रतिशमं यान्त्येव सर्व्वे ग्रहाः ॥ २७ ॥
षट्कोणे कर्णिकायां स्फुरयुगलयुता (१) साध्यगर्भाञ्च शक्तिं
कोणाढ्ये प्रस्फुरद्द्वन्द्वकमथ विलिखेन्मन्त्रवर्णान् दलेषु ।
षट्के दद्वन्द्वषट्के दकचतुयगषट्संख्यकान् बाह्यषट्के
वर्म्मास्त्राख्यं तदेतद्ग्रहगदभयहृद्यन्त्रमाघोरमाहुः ॥ २८ ॥

---

(१) "स्फुरयुगलयुताम्" इति पाठान्तरम् ।

न च रिपवो न च रोगा न ग्रहपीड़ा न शस्त्रबाधा च ।
न क्ष्वेलरुजो मर्त्यान् स्पृशन्त्यघोरास्त्रमन्त्रजापरतान् ॥ २८ ॥
तस्मादघोरास्त्रमनुं प्रजप्यात् समर्च्चयेत्तद्विहितं विधानम् ।
जुहेच्च तेनैव समस्तवाञ्छासंसिद्धये चाथ विमुक्तये च ॥ ३० ॥

　　खसप्तमः कर्णयुतोऽर्द्धचन्द्रवान्
　　कुपञ्चमो द्वीन्दुयुतो भृवादिकः ।
　　मनुस्त्वयं मृत्युजयात्मकः स्फुटं
　　समीरितः साधकरक्षणक्षमः ॥ ३१ ॥

ऋषिरस्य कहोलाख्यः छन्दो देव्यादिका च गायत्री ।
स्याद्देवता च मृत्युञ्जयरुद्रोऽङ्गान्यथाचरेद्भृगुणा ॥ ३२ ॥

　　पुटितनलिनसंस्थं मौलिबद्धेन्दुरेखा
　　गलदमृतजलार्द्रं चन्द्रवह्न्यर्कनेत्रम् ।
　　स्वकरकलितमुद्रापाशवेदाक्षमालं
　　स्फटिकरजतमुक्तागौरमीशं नमामि ॥ ३३ ॥

जप्तव्योऽयं मन्त्रवर्य्यस्त्रिलक्षं दीक्षापूर्व्वं होमकृत्याद्दशांशैः ।
दुग्धान्याक्तैः शुद्धखण्डैर्गुडूच्या गुर्व्वादेशात् साधको हव्यवाहे ॥ ३४ ॥
अर्च्चा कार्य्या नित्यशः शैवपीठे स्यादप्यङ्गैर्लोकपालैस्तदस्त्रैः ।
सम्यक् पूजायस्तुभिर्मन्त्रजापी प्रोक्तं ह्येतन्मृत्युजेतुर्व्विधानम् ॥ ३५ ॥
इति जपहुतार्च्चनादिभिः सिद्धो मन्त्रोऽभिविहिततनुः ।
समाचरेन्निजान्तर्योगं कृत्वापमृत्युनाशकरम् ॥ ३६ ॥
तारजातमथ मध्यपत्रकं ह्याद्यकर्णिकयुतं क्रमोत्क्रमात् ।
चिन्तयेन्नियतमन्तरा शिवं नीरजे च नियतायुपेऽक्षयोः ॥ ३७ ॥

　　ऊर्द्धाधः प्रोतपद्मद्वयदलनिहितैरक्षरैस्तैर्ध्रुवाद्यै
　　राद्यस्त्रैर्मन्दमन्दप्रतिगलितसुधापूरसंसिच्यमानम् ।
　　ईशानं सूक्ष्मरूपं विमलतरसुषुम्नान्तरा सन्निपन्नं
　　ध्यायन्नाप्नोति रोगैर्नियतपरिहृतस्तज्जपाद्दीर्घमायुः ॥ ३८ ॥

आदौ तारं विलिखतु ससाध्याह्वयं कर्णिकायां
दिक्पत्रेष्वप्यपरमपरं वापि तत्कोणकेषु ।
भूयो भूमेः परमनु मृगाङ्कं तदस्रेषु ठान्तं (१)
जप्ता वस्य(२)ग्रहगदविषध्वंसि यन्त्रं तदेतत् ॥ ३९ ॥
इति कृतयन्त्रविभूषितमण्डलमध्ये निधाय कलशमपि ।
आपूर्य्य चाभिषिञ्चेत्क्ष्वेलवश्यकरं ग्रहाभिचारहरम् ॥ ४० ॥
चतुरङ्गुलिपरिमाणैरमृताकाण्डैरथार्कसाहस्रम् ।
जुहुयाच्च दुग्धसिक्तैरारोग्यायायुषे च लक्ष्मै च ॥ ४१ ॥
ततश्छिन्नोद्भवानाञ्च समिद्भिश्चतुरङ्गुलैः ।
दुग्धसिक्तैः समिद्धेऽग्नौ पट्सहस्रद्वयं हुनेत् ॥ ४२ ॥
यस्तु वह्नौ जुहोत्येवं यावत्संख्येन साधकः ।
तावत्संख्यैः सुधाकुम्भैरग्निः प्रीणाति शङ्करम् ॥ ४३ ॥
आप्यायितोऽग्निना सर्व्वैः साधकस्येप्सितान् वरान् ।
प्रदद्यादायुरारोग्य दुरन्तान् प्रलयान्तिकान् ॥ ४४ ॥
मन्त्रान्ते माध्याख्यां पाल्ययुगलं प्रतीपमपि मन्त्रम् ।
प्रोक्ता समापयेन्मनुमयमपि मृत्युञ्जयाह्वयो मन्त्रः ॥ ४५ ॥
अथवाऽमलकमलपुटान्तरितं शिशुवेशभूषणं रुद्रम् ।
ध्यात्वा जप्याद्द्वयावद्भूतक्लृप्त्या मृत्युनाशनं दृष्टम् ॥ ४६ ॥
अमृता वटतिलदूर्व्वाः पयो घृतं पायसं क्रमेणेति ।
सप्तद्रव्याण्युक्तान्येतैर्जुहुयात् पृथक् सहस्रत्रयम् ॥ ४७ ॥
तीव्रज्वरे घोरतरेऽभिचारे सोन्मादके दाहगदे च मोहे ।
तनोति शान्तिं न चिरेण होमः सञ्जीवनं चाब्दशतप्रमाणम् ॥ ४८ ॥
सम्भोजयेद्धोमदिनेषु विप्रान् सप्ताधिकान् स्वादुभिरन्नभोज्यैः ।
सतर्पका गाश्च हुतावसाने दद्याद्द्विजेभ्यो हुतकर्म्मकृद्यः ॥ ४९ ॥

---

(१) "ठान्तम्" इति पाठान्तरम् ।
(२) "वश्यम्" इति पाठान्तरम् ।

निजजन्मदिने शतं शतं यो जुहुयाद्द्रव्यवरैश्च सप्तसंख्यैः।
मधुरैः प्रतिभोजयेच्च विप्रानभिवाञ्छन्नियमेन दीर्घमायुः ॥ ५० ॥
अथवा सप्तभिरेतैर्द्रव्यैरेकेण वा सहस्रत्रितयम्।
जन्मर्क्षहोममात्रान्निरुपद्रवमुत्तमं व्रजेदायुः ॥ ५१ ॥
दूर्व्वात्रितयैः पयसा जुहुयादेकादशाहुतीर्द्दिनशः।
जित्वापमृत्युरोगान् प्रयात्यसावायुषश्च दैर्घ्यमपि ॥ ५२ ॥
जन्मर्क्षाणां त्रितये छिन्नाकाश्मर्य्यवकुलजैरिध्मैः।
क्रमशो हुनेत् सहस्रं नश्यन्त्यपमृत्युरोगदुरितानि ॥ ५३ ॥
सितसिद्धार्थैः सहस्राहुत्या नश्यन्त्युपद्रवा ज्वरजाः।
तद्वदपामार्गहुतान्मृत्युञ्जयमप्यरोगतां लभते ॥ ५४ ॥
प्रोक्तैर्ध्यानजपार्चनाहुतविधानाद्यैश्च मृत्युञ्जयं
यो मन्त्री प्रभजेन्मनुं प्रतिदिनं प्रातः प्रसन्नाशयः।
तस्येष्टानि भवन्ति सम्भृति(१)रपि स्फीता च पुत्रादयः
सम्पन्नाः ससुखी च जीवति चिरं देशापदि स्याच्छिवः ॥ ५५ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे सप्तविंशः पटलः ॥ * ॥

---

(१) "संहृति." इति पाठान्तरम्।

## अष्टाविंशः पटलः ।



अथ सजपहुताद्यैर्वच्यते साधुचिन्ता-
मणिरभिमतकामप्राप्तिकल्पद्रुमोऽयम् ।
अनलकयमरेफप्राणसत्यान्तवाम-
श्रुतिहिमरुचिखण्डैर्मण्डितो मन्त्रराजः ॥ १ ॥
ऋषिरपि काश्यप उक्तश्छन्दोऽनुष्टुब्देवता महेशः ।
यान्तैः षड्भिर्वर्णैरङ्गं वा देवतार्द्धनारीशः ॥ २ ॥
अहिशशधरगङ्गाबद्धतुङ्गात्ममौलि-
स्त्रिदशगणनताङ्घ्रिस्त्रीक्षणस्त्रीविलासः ।
भुजगपरशुशूलान् खड्गवह्नी कपालं
शरमपि धनुरीशो बिभ्रदव्याच्चिरं वः ॥ ३ ॥
हावभावललितार्द्धनारिकं भीषणार्द्धमथवा महेश्वरम् ।
पाशसोत्पलकपालशूलिनं चिन्तयेज्जपविधौ विभूतये ॥ ४ ॥
अथवा षोडशशूलव्यग्रभुजा त्रिनयनाऽहिनद्धाङ्गी ।
अरुणांशुकानुलेपनवर्णाभरणा च भगवती ध्येया ॥ ५ ॥
विहितार्चनविधिरथानुदिनं प्रजपेद्दशायुतमितं मतिमान् ।
*अयुतं हुनेत्त्रिमधुरार्द्रतरैस्तिलतण्डुलैस्तदवसानविधौ ॥ ६ ॥*
शैवोक्तपीठाङ्गपदैर्यथावद्वज्रे च दुर्गानगसैर्मुखाद्यैः ।
समातृभिर्दिक्पतिभिर्महेशं पञ्चोपचारैर्विधिनार्चयीत ॥ ७ ॥
आरभ्यादित्यनन्तं दिक्संस्थैरष्टाभिर्मनोर्वर्णैः ।
आराधयेच्च मातृभिरिति संप्रोक्तः प्रयोगविधिरपरः ॥ ८ ॥

कात्पूर्वं हंसलिपिसंयुतं जपादौ
जप्तॄणां प्रवरमितीह केचिदाहुः ।
प्रासादाद्ययुतजपेन मङ्क्षु कुर्या-
दावेशादिकमपि नीरुजाद्य मन्त्रः ॥ ६ ॥
शिरसोऽवतरन्निशेशबिम्बस्थितमञ्भिवृतमागलत्सुधार्द्रम् ।
अपमृत्युहरं विषज्वरापस्मृतिविभ्रान्तिशिरोरुजापहञ्च ॥ १० ॥
निजवर्णविकीर्णकोणवैश्वानरगेहहितयावृतत्रिकोणम् ।
विगतस्वरवीतमुत्तमाङ्गे स्मृतमेतत् च्पयेत् चणात् ग्रहार्त्तिम् ॥ ११ ॥
वह्निर्बिम्बे वह्निवत् प्रज्वलन्तं न्यस्वा बीजं मस्तके ग्रस्तजन्तोः ।
ध्यात्वा वेशं कारयेद्दन्धुजीवं तज्ञप्तं वा सम्यगाप्राणनेन ॥ १२ ॥
शुक्लादिः शुक्लभाः पौष्टिकशमनविधौ क्ष्टिवश्येषु रक्तो
रक्तादिः चोभसंस्तोभनविधिषु हकारादिको हेमवर्णः ।
धूम्राङ्गो मर्द्दनोच्चाटनविधिषु समीरादिको मादिरक्तः
पीताभः स्तम्भनादौ मनुरतिविमलो मुक्तिभाजामनादिः ॥ १३ ॥
कृष्णाभं प्राणगेहस्थितमथ नयने ध्यातमान्ध्यं विधत्ते
बाधिर्य्यं कर्णरन्ध्रेऽर्द्दितमपि वदने कुक्षिगं शूलमाशु ।
मर्म्मस्थाने समीरं सपदि शिरसि वा दुःसहं शीर्षरोगं
वाग्रोधं कण्ठनालेऽवनिवृतमथ तन्मण्डले बीजमेतत् ॥ १४ ॥
प्रालेयत्विषि च स्वरावृतमिदं नेत्रे स्मृतं तद्रुजं
योनौ वामदृशामसृक्श्रुतिमथो कुक्षौ च शूलं जयेत् ।
विस्फोटे सविषे ज्वरे त्वचि तथा रक्तामये विभ्रमे
दाहे शीर्षगदे स्मरेद्विधिमिमं सन्तृप्तये मन्त्रवित् ॥ १५ ॥
साध्याया हृदयकुशेशयोदरस्थं
प्राणाख्यं दृढमभिबध्य बीजवर्णैः ।
तेजस्विच्छिरसि विधुं विधाय वा
तेनाकर्षेदपि निजधाम्न्ययेव मन्त्री ॥ १६ ॥

पारिभद्रसुमनोदलभद्र वह्निविम्बगतमचरमेतत् ।
सस्मरेच्छिरसि यस्य स वशो जायते न खलु तत्र विचार ॥ १७ ॥
निजनामगर्भमथ बीजमिद प्रविचिन्त्य योनिसुपरि सुदृश ।
वशयेत् चणाच्छिततया मनस स्रवयेच्च शुक्रमयया रुधिरम ॥ १८ ॥
निजशिवशिर स्थित तद्बीज स्मृत्वा प्रवेशयेद्योनौ ।
यस्यास्तत्सम्पर्कात्ताश्च स्रवयेत् क्रमेण वशयेच्च ॥ १९ ॥
परेफगर्भधृतसाध्यपद त्रिकग हुताशयुगपटकहृतम् ।
विगतस्वराहृतमगारभुवि स्थितमेतदाशु वशयेद्रमणात् ॥ २० ॥
मधुरत्रयसयुतेन शालीरजसा पुत्तलिका विधाय तेन ।
मनुना जुहुयात्तथा विभज्य त्रिदिन यस्य कृते वशी भवेत् स ॥ २१ ॥
विषपावकोयदभिधानपदं ठगतं कुकोणधृतलाङ्गलिकम् ।
भ्रहियत्नकृतपरिजप्तमिद शिरसो रुज प्रशमयेददनात् ॥ २२ ॥
कण्ठे केनावृद्धार्पितदहनयुजा मज्ज्या मेन वाम
दर्च सविद्य वक्षोरुहमनलसमीरौभिरसद्दयच्च ।
वक्त्रे नाभौ च दीर्घ सुमतिरथ विनि क्षिप्य विन्दु निशेश
वक्तस्याधाय वद्धा चिरमिव विहरेत् कन्दुकैरात्मसाध्ये ॥ २३ ॥
कृत्वा वह्नेः पुरमनु मनु वन्धुजीवेन तस्मि-
न्नाधायाग्नि विधिवदभिसपूज्य चान्ये शताख्यम ।
त्रैलोक्याख्ये प्रतिविहितसपातमष्टोत्तर त
हुत्वा जप्त दुरितविषवेतालभूतादिहारि ॥ २४ ॥
माध्याख्यागर्भमेन लिख दहनपुरे कर्णिकाया षडस्र
वाह्याश्रिष्वङ्गमन्त्रान् दलमनु परितो बीजवर्णान् विभज्य ।
भूयोऽच कादियादीस्त्रिषु (१) हृतिषु कुगेहास्रके नारसिह
तस्मिन् कार्यो यथावल्लक्षणविधिरय सर्व्वरक्षाकर स्यात् ॥ २५ ॥

---

(१) "कादियादीस्त्रिषु" इति पाठान्तरम् ।

टान्ते लिख्यात् कलाभिर्वृतमसु(१)मनलावासयुग्मेन वह्नि-
द्योतत्कोणेन वाह्ये तदनु सविठविम्बेन कार्यार्णभाजा ।
तद्वाह्ये क्ष्मापुराभ्यां लिखितनृहरियुक्ताङ्कुशकाभ्यां तदेतद्-
यन्त्रं रत्नाकरं स्याद्ग्रहभयविषमज्वेलजूर्त्यादिरोगे ॥ २६ ॥
विम्बद्वन्द्वे कृशानोर्विलिखतु मनुमेनं ससाध्यं तदस्त्रि-
ष्वग्न्यादीन् व्यञ्जनार्णान् स्वरयुगलमथो सन्धिषट्के यथावत् ।
तारावीतञ्च वाह्ये कुरङ्गपरिहृतं गोमयागोचनाभ्यां
लाक्षावद्धं निबध्याज्जपमहितमिदं साधु साध्योत्तमाङ्गे ॥ २७ ॥
लक्ष्म्यायुः पुष्टिकरं परञ्च सौभाग्यवश्यकृत् सततम् ।
चोरव्यालमहोरग(२)भूतापस्मारहारि यन्त्रमिदम् ॥ २८ ॥
साध्याख्याकर्मयुक्तं दहनपुरयुगे मन्त्रमेनं तदस्त्रि-
ष्वग्निज्वालाश्च वाह्ये विपतरुविटपे साग्रशाखे लिखित्वा ।
जप्ताष्टोर्द्धं सहस्रं नृहरिकृतधिया स्थापयेत्तत्र शत्रु-
व्याघ्रादिक्रोड़चोरादिभिरपि च पिशाचादयो न व्रजन्ति ॥ २९ ॥
ससिद्धसुरपूजितः सकलवर्गसंसाधको
ग्रहज्वरविषापहो विविधकामकल्पद्रुमः (३) ।
किमत्र बहुना नृणामभिमतार्थचिन्तामणिः
समुक्त इह संग्रहान्मनुवरस्तु चिन्तामणिः ॥ ३० ॥
पञ्चस्वरो हुतवहस्तु पयोस्तुरीया-
वादिस्वरो मनुरयं कथितः फडन्तः ।
अस्य ऋषिर्निगदितो मुनिरप्यनुष्टुप्-
छन्दश्च चण्डसहितो मनुदेवतेशः ॥ ३१ ॥

(१) "हतमतुम्" इति पाठान्तरम् ।
(२) "महोरग" इत्यत्र "महारोग" इति पाठान्तरम् ।
(३) "ग्रहज्वररुजापहो विषविषर्धिदोषापहः" इति पाठान्तरम् ।

अनुदिनमष्टशतं यो जुहुयात् पुष्पैरनेन मन्त्रेण ।
सप्तदिनैः स तु लभते वासस्तद्दर्णसङ्काशम् ॥ ४३ ॥
अहरहरष्टशतं यो मन्त्रेणानेन तर्पयेदीशम् ।
तस्य तु मासचतुष्कादर्व्वाक् सञ्जायते महालक्ष्मीः ॥ ४४ ॥
साध्यर्चाङ्घ्रिपचर्मणा सुमसृणां पिष्टेन लोणैः कृतां
छित्त्वा (१) पुत्तलिकां प्रतिष्ठितचलां जग्ध्वा च रात्रौ हुनेत् ।
सप्ताहं पुरुषोऽङ्गना यदि चिरं वश्यस्ववश्यश्भवे-
दस्मिन् जन्मनि नात्र चोद्यविषयो देहान्तरे संशयः ॥ ४५ ॥
इति चण्डमन्त्रविहितं विधिवद्विधिमादरेण य इमं भजते ।
स तु वाञ्छितं पदमिहाप्य पुनः शिवरूपतामपि परत्र लभेत ॥ ४६ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे अष्टाविंशः पटलः ॥ * ॥

---

(१) "पिष्टेन लोणेन वा कृता" इति पाठान्तरम् ।

दीप्तज्वलज्ज्वालिनिभिस्तटेन च हनेन च ।
सर्व्वज्वालिनिसंयुक्तैः फडन्तैरङ्गमारभेत् ॥ ३२ ॥
अव्यात् कपर्दकलितेन्दुकलःकरात्तशूलाचसूत्रककमण्डलुटङ्क ईशः
रक्ताभ्रवर्णवसनो(१)ऽरुणपद्मजस्थो नेत्रत्रयोल्लसितवक्त्रसरोरुहो वः ॥ ३३ ॥
कृतसन्दीक्षो मन्त्री जप्यात्लक्षत्रयञ्च मन्त्रमिमम् ।
जुहुयाच्चिमधुरयुक्तैः सतिलैरपि तण्डुलैर्दशांशेन ॥ ३४ ॥
व्याघातसमिद्भिर्व्वा मनुजापी तावतीभिरथ जुहुयात् ।
पूर्व्वोक्त एव पीठे गन्धाद्यैरर्च्चयेच्च चण्डेशम् ॥ ३५ ॥
चण्डचण्डाय चेत्युक्त्वा प्रवदेद्विद्महे पदम् ।
चण्डेश्वराय च प्रोक्त्वा धीमहि पदमुद्धरेत् ॥ ३६ ॥
तन्नश्चण्ड इति प्रोक्त्वा ब्रूयाद्भूयः प्रचोदयात् ।
एषा तु चण्डगायत्री जपात् सान्निध्यकारिणी ॥ ३७ ॥
अङ्गैः समावृतिर्मन्त्री लोकेशैः संप्रपूजयेत् ।
कूर्म्मो विष्णुयुतो दण्डी बीजमस्योच्यते बुधैः ॥ ३८ ॥
वदेच्चण्डेश्वरायेति बीजादिहृदयान्तिकम् ।
अर्चनादिविधिं मन्त्रं यथावत् सम्प्रयोजयेत् ॥ ३९ ॥
एवं जपहुतार्च्चाभिः सिद्धे मन्त्रे तु मन्त्रिणः ।
वाञ्छितादधिकं लभ्येत् काञ्चनं नात्र संशयः ॥ ४० ॥
अक्षरस्य जपो यावत्तावज्जप्यात् षडक्षरम् ।
ऐहिकामुष्मिकीं सिद्धिं तथा हि लभते नरः ॥ ४१ ॥
कृत्वा पिष्टेन शाल्याः प्रतिकृतिमनलं चापि काष्ठैश्चितानां
आधायारभ्य पुंसश्चिमधुरलुलितं दक्षिणाङ्गुष्ठदेशात् ।
छित्वा छिन्नाष्टयुक्तं शतमथ जुहुयाद् योषितो वामभागा-
द्विप्रादीनां चतुर्णां वशकरमनिशं मन्त्रमेतद्दुतात्मम् ॥ ४२ ॥

---

(१) "रक्ताभ्रवर्णवसनः" इति पाठान्तरम् ।

अनुदिनमष्टशतं यो जुहुयात् पुष्पैरनेन मन्त्रेण ।
सप्तदिनैः स तु लभते वासस्तदर्पणमहागम् ॥ ४३ ॥
अहरहरष्टशतं यो मन्त्रेणानेन तर्पयेद्देवीम् ।
तस्य तु मासचतुष्कादर्वाक् सम्भायते महालक्ष्मीः ॥ ४४ ॥
साध्यर्चाङ्घ्रिपचर्मणा सुमहतीं पिष्टेन लोष्टैः कृतां
छित्त्वा (१) पुत्तलिकां प्रतिष्ठितचलां जुह्वा च रात्रौ हुनेत् ।
सप्ताहं पुरुषोऽङ्गना यदि चिरं वश्यस्तदाजन्मने-
दस्मिन् जन्मनि नात्र चोद्यविषयो दृष्टान्तरे संशयः ॥ ४५ ॥
इति चण्डमन्त्रविहितं विविधर्द्धिविभाटरेष य इमं मनुते ।
स तु वाञ्छितं पदमिहाप्य पुनः शिवरूपतामपि परत्र भजेत ॥ ४६ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे अष्टाविंशः पटलः ॥ * ॥

---

(१) "पिष्टेन लोष्टेन वा कृता" इति पाठान्तरम् ।

# एकोनत्रिंशः पटलः ।

अथाखिलार्थानुगतैव शक्तिर्युक्ता चतुर्विंशतितत्त्वभेदैः ।
गायत्रिसंज्ञापि च तद्विशेषान् सह्रप्रयोगान् प्रवदामि साङ्गान् ॥ १ ॥
ताराह्वयो व्याहृतयश्च सप्त गायत्रिमन्त्रः शिरसा समेतः ।
अन्वर्थकं मन्त्रमिमन्तु वेदसारं पुनर्व्वेदविदो वदन्ति ॥ २ ॥
जप्यः स्यादिह परलोकसिद्धिकामैर्मन्त्रोऽयं मह्रिततरो द्विजैर्यथावत् ।
भूदेवा नरपतयस्तृतीयवर्णाः संप्रोक्ता द्विजवचनेन तेऽत्र भूयः ॥ ३ ॥
तेषां शुद्धकुलद्वयोत्थमहसामारभ्य तान्तुक्रियां
तारव्याहृतिसंयुता सहशिरो गायत्र्युपास्या परा ।
सन्ध्योपासनया जपेन च तथा स्वाध्यायभेदैरपि
प्राणायामविधानतो मतिमतां ध्यानैस्तथा नित्यशः ॥ ४ ॥
आदौ तारः प्रकृतिविकृतिप्रोत्थितोऽसौ च मूला-
धारादारादलिरुतिरिवाविश्य सौषुम्नमार्गम् ।
आद्यैः शान्तावधिभिरनुगो मात्रया सप्तभेदैः
शुद्धो मूर्द्धावधिपरिगतः शाश्वतोऽन्तर्व्वहिश्च ॥ ५ ॥
प्रकाशितादौ प्रणवप्रपञ्चता निगद्यते व्याहृतिसप्तकं पुन. ।
सभूर्भुवः स्वश्च महोजनस्तपःसमन्वितं सत्यमिति क्रमेण च ॥ ६ ॥
भूपदाद्या व्याहृतयो भूशब्दस्तदि वर्त्तते ।
तत्पदं सदिति प्रोक्तं सन्मात्रत्वात्तु भूरतः ॥ ७ ॥
भूतत्वात् कारणत्वाच्च भुवः शब्दस्य सङ्गतिः ।
सर्व्वस्य स्वीरणात् स्वात्मतया च स्वरितीरितम् ॥ ८ ॥
महत्त्वाच्च महस्त्वाच्च महः शब्दः समीरितः ।
तदेव सर्व्वजननात्तस्मात्तु व्याहृतिर्जनः ॥ ९ ॥

तपो ज्ञानतया चैव तथा तापतया स्मृतम्।
सत्यं परत्वादात्मत्वादनन्तज्ञानतः स्मृतम् ॥ १० ॥
प्रणवस्य व्याहृतीनामतः सम्बन्ध उच्यते।
अकारो भूरुकारस्तु भुवो मार्णः स्वरीरितः ॥ ११ ॥
विन्दुर्महस्तथा नादो जनः शक्तिस्तपः स्मृतम्।
शान्तं सत्यमिति प्रोक्तं यत् स्यात् परतर पदम् ॥ १२ ॥
प्रणवस्य व्याहृतीनां गायत्रैरक्यमथोच्यते।
अत्रापि तत्पदं पूर्व्वं प्रोक्तं तदनु वर्ण्यते ॥ १३ ॥
तद्द्वितीयैकवचनमनेनाखिलवस्तुनः।
सृष्ट्यादिकारणं तेजोरूपमादित्यमण्डले ॥ १४ ॥
अभिध्येयं (१) सदानन्दं परं ब्रह्माभिधीयते।
यत्तत् सवितुरित्युक्तं षष्ठेरकवचनात्मकम् ॥ १५ ॥
धातोरिह विनिष्पन्नं प्राणिप्रसववाचकात्।
सर्व्वासां प्राणिजातीनामिति प्रसवितुः सदा ॥ १६ ॥
वरेण्यं वरणीयत्वात् सेवनीयतया तथा।
भजनीयतया सर्व्वैः प्रार्थनीयतया स्मृतम् ॥ १७ ॥
पूर्व्वस्याष्टाचरस्यैवं व्याहृतिर्भूरिति स्मृता।
पापस्य भर्ज्जनाद्भर्गो भक्तस्निग्धतया तथा ॥ १८ ॥
देवस्य वृष्टिदानादिगुणयुक्तस्य नित्यशः।
प्रभूतेन प्रकाशेन दीप्यमानस्य वा तथा ॥ १९ ॥
ध्यै चिन्तायामतो धातोर्निष्पन्नं धीमहीत्यदः।
निगमाद्येन दिव्येन विद्यारूपेण चक्षुषा ॥ २० ॥
दृश्यो हिरण्मयो देव आदित्यो नित्यसंस्थितः।
हीनतारहितं तेजो यथा स्यात् स हिरण्मयः ॥ २१ ॥

(१) "अभिधेयम" इति पाठान्तरम्।

यः सूक्ष्मः सोऽहमित्येवं चिन्तयामः सदैव तु ।
द्वितीयाष्टाक्षरस्यैवं व्याहृतिर्भुव ईरिता ॥ २२ ॥
धियो बुद्धीर्मनोरस्य छान्दसत्वाद् य ईरितः ।
कृतश्च लिङ्गव्यत्यासः सूत्रात् सुप्तिङुपग्रहात् ॥ २३ ॥
यत्तु तेजो निरुपमं सर्ववेदमयात्मकम् ।
भजतां पापनाशस्य हेतुभूतमिहोच्यते ॥ २४ ॥
न इति प्रोक्त आदेश षष्ठ्यसौ युष्मदस्मदोः ।
तस्मादस्माकमित्यर्थः प्रार्थनायां प्रचोदयात् ॥ २५ ॥
तृतीयाष्टाक्षरस्यापि व्याहृतिः स्वरितीरिता ।
एवं दशपदान्यस्यास्त्रयश्चाष्टाक्षराः स्मृताः ॥ २६ ॥
षड्वराश्च चत्वारः स्युश्चतुर्विंशदक्षराः ।
इत्थम्भूतं यदेतस्य देवस्य सवितुर्विभोः ॥ २७ ॥
वरेण्यं भजतां पापविनाशनकरं परम् ।
भर्गोऽस्माभिरभिध्यातं धियस्तन्नः प्रचोदयात् ॥ २८ ॥
उक्तैवमत्र गायत्री पुनस्तच्छिर उच्यते ।
आपो ज्योतीरस इति सोमाग्न्योस्तेज उच्यते ॥ २९ ॥
तदात्मकं जगत् सर्वं रसस्तेजोद्वयं स्मृतम् ।
अमृतं तदनाशित्वाद्बृहत्वाद्ब्रह्म उच्यते ॥ ३० ॥
यदानन्दात्मकं ब्रह्म सत्यज्ञानादिलक्षणम् ।
तद्भूर्भुवः स्वरित्युक्तं सोऽहमित्योमुदाहृतम् ॥ ३१ ॥
एतत्तु वेदसारस्य शिरस्त्वाच्छिर उच्यते ।
लक्षणैरिति निर्दिष्टे वेदसारे सुनिश्चितः ॥ ३२ ॥
फलार्थी फलमाप्नोति मुमुक्षुर्मोक्षमृच्छति ।
उषस्युषसि चोत्थाय कृतशौचविधिर्द्विजः ॥ ३३ ॥
दन्तानां धावनञ्चैव जिह्वानिर्लेखनादिकम् ।
कृत्वा स्नात्वा समाचम्य मन्त्रपूतेन वारिणा ॥ ३४ ॥

आपोहिष्ठामयाद्याभिर्ऋग्भिस्तिसृभिरेव च ।
अभ्युक्ष्य शुद्धदेहः सन् गृहीत्वाञ्जलिना जलम् ॥ ३५ ॥
आदित्याभिमुखो भूत्वा तद्गतात्मोर्द्धलोचनः ।
वेदसारं जपन् ज्योतिर्मूलभूतं परात्परम् ॥ ३६ ॥
हृत्स्थं सर्व्वस्य लोकस्य मण्डलान्तर्व्यवस्थितम् ।
चिन्तयन् परमात्मानमपस्तूर्द्धं विनिःक्षिपेत् ॥ ३७ ॥
एनस्ताः प्रतिनिघ्नन्ति जगदाप्याययन्ति च ।
ततः प्रदक्षिणीकृत्य पुनराचम्य संयतः ॥ ३८ ॥
क्रमात्तारादिमन्त्राणामृष्यादीन् विन्यसेत् सुधीः ।
तत्र तु प्रणवस्यादावृषिरुक्तः प्रजापतिः ॥ ३९ ॥
छन्दस्तु देवी गायत्री परमात्मा च देवता ।
जमदग्निभरद्वाजभृगुगौतमकाश्यपाः ॥ ४० ॥
विश्वामित्रो वसिष्ठाख्य ऋषयो व्याहृतीरिताः ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ ४१ ॥
त्रिष्टुव्जगत्यौ छन्दांसि कथ्यन्ते देवता अपि ।
सप्तार्चिरनिलः सूर्य्यो वाक्पतिर्व्वरुणो वृषा ॥ ४२ ॥
विश्वेदेवा इति प्रोक्ताः सप्तव्याहृतिदेवताः ।
हृन्मुखांसोरुयुग्मेषु सोदरेषु क्रमान्न्यसेत् ॥ ४३ ॥
विश्वामित्रस्तु गायत्र्या ऋषिश्छन्दः स्वयं स्मृतम् ।
सविता स्याद्देवता च ब्रह्मा शिरऋषिः स्मृतः ॥ ४४ ॥
छन्दस्तु देवी गायत्री परमात्मा च देवता ।
स्थानेषु पूर्व्वसुक्तेषु सतारा व्याहृतीर्न्यसेत् ॥ ४५ ॥
गायत्रीं शिरसा विद्वान् जप्याप्तिः स्यादुपासना ।
हृदयेऽधस्तथोर्द्धञ्च महादिष्वपि संयतः ॥ ४६ ॥
व्यापयेद्व्याहृतीः सम्यग्गायत्रीञ्च शिरोयुताम् ।
मार्थं संस्मृत्य संजप्याप्तिविधिं जपलक्षणम् ॥ ४७ ॥

आत्मन्यधश्चोपरि च दिग्भ्यस्ताः समुपानयेत् ।
गायत्रीं पूर्व्ववज्जप्यात् स्वाध्यायविधिरीदृशः ॥ ४८ ॥
एतत्त्रयं त्रिशः कुर्य्यादृजुकायस्त्वनन्यधीः ।
निरुच्छ्वासः स विज्ञेयः प्राणायामो मनीषिभिः ॥ ४९ ॥
ध्यानस्य केवलस्यास्य व्याख्याने दर्शितः क्रमः ।
विद्याष्टत्यादिमभ्यस्येद्गायत्रीं सन्ध्ययोः सुधीः ॥ ५० ॥
शतं वाथ सहस्रं वा मन्त्रार्थगतमानसः ।
पूर्व्वं प्रपञ्चयागोक्तान् गाणपत्यजपादिकान् ॥ ५१ ॥
लिपिन्यासादिकान् साङ्गान् (१) ग्रहन्यासादिसंयुतान् ।
सनिजर्घ्यादिकान् सर्व्वान् विदध्याद्विधिवद्बुधः ॥ ५२ ॥
पादसन्धिचतुष्कान्तुनाभिहृद्गलदोर्द्वये ।
सन्ध्यास्यनासागण्डाक्षिकर्णभ्रूमस्तकेष्वपि ॥ ५३ ॥
वारुणेन्द्वयाम्यप्रागूर्द्ध्वगेषु मुखेषु च ।
क्रमेण वर्णान् विन्यस्येद्गायत्र्या मन्त्रवित्तमः ॥ ५४ ॥
शिरोभ्रूमध्यनयनवक्त्रकण्ठेषु (२) वै क्रमात् ।
हृन्नाभिगुह्यजान्वाख्यपादेष्वपि पदान्यसेत् ॥ ५५ ॥
सब्रह्मविष्णुरुद्रेश सेश्वरैः ससदाशिवैः ।
ससर्व्वात्माह्वयैः (३) कुर्य्यादङ्गन्यासं समाहितः ॥ ५६ ॥
एवं कृत्वा तु सिद्ध्यर्थं गायत्रीं दीक्षितो जपेत् ।
अथ त्रिगुणितप्रोक्ते विचित्रे मण्डलोत्तमे ॥ ५७ ॥
शक्तिभिः प्राक् समुक्ताभिः सौरं पीठं समर्च्चयेत् ।
तत्र निःक्षिप्य कलशं यथापूर्व्वोपचारतः ॥ ५८ ॥

---

(१) "मार्गान्" इति पाठान्तरम् ।
(२) "गण्डेषु" इति पाठान्तरम् ।
(३) "ससर्व्वार्थाह्वयैः" इति पाठान्तरम् ।

गव्यैर्वा पञ्चभिः क्वाथजलैर्वा पूरयेत्ततः ।
तस्मिन्नावाह्य कलशे शक्तिमित्थं विचिन्तयेत् ॥ ५९ ॥
मन्दाराद्वयरोचनाञ्जनजवाच्छाभे(१)र्मुखैरिन्दुम-
द्रत्नोद्यन्मुकुटाङ्गसन्ततचतुर्विंशार्णचित्रा तनुः ।
अङ्गे चारिगदाह्वयौ गुणकपालाख्यौ च पाशाङ्कुशे-
ष्टाभीतीर्दधती भवेद्भवदभीष्टोद्भाविनी तारणी ॥ ६० ॥
संचिन्त्य भर्त्तारमिति प्रभाणां त्रिशक्तिमूर्त्तिः प्रथमं समर्च्य ।
आदित्यगत्याख्यचतुष्टयेन यजेद्द्वितीयावरणे दिनेशम् ॥ ६१ ॥
प्रह्लादिनी प्रभा नित्या सविश्वम्भरसंज्ञिका (२) ।
विलासिनीप्रभावत्यौ जया शान्ता (३) क्रमाद्यजेत् ॥ ६२ ॥
कान्ता दुर्गासरस्वत्यौ विद्या रूपाह्वया तथा ।
विशालेशा व्यापिनी च विमलाख्या क्रमाद्यजेत् ॥ ६३ ॥
तमोपहारिणी सूक्ष्मा विश्वयोनिर्जयावहा ।
पद्मालया परा शोभा भद्ररूपा(४) तथा यजेत् ॥ ६४ ॥
मातृभिः सारुणान्ताभिः षष्ठयथो सप्तमी ग्रहैः ।
आदित्यपार्श्वदन्तैरप्यष्टमीन्द्रादिभिः सुरैः ॥ ६५ ॥
आवृतिः कथितश्चेति विधानं परमीदृशम् ।
गन्धादिभिर्निवेद्यान्तैर्द्दिनेशं सम्यगर्चयेत् ॥ ६६ ॥
अथ पुनरमुमभिषिञ्चेत् संयतचित्तश्च देशिकः शिष्यम् ।
कृतहुतविधिमपि विधिवद्विहितवलिं दत्तदक्षिणं गुरवे ॥ ६७ ॥
भूयस्त्वचरलक्षं गायत्रीं संयतात्मको जप्त्वा ।
जुहुयात् पायसघृततिलदूर्व्वाभिर्दुग्धतरुसमिद्भिरपि ॥ ६८ ॥
एकैकं त्रिसहस्रं मन्त्री समभीष्टसिद्धये सुकृती ।
अक्षरसहस्रसंख्यं मुख्यतरैः केवलैस्तिलैर्जुहुयात् ॥ ६९ ॥

---

(१) "अञ्जनाभे" इति पाठान्तरम् । (३) "शौता" इति पाठान्तरम् ।
(२) "सविश्वहरसंज्ञिका" इति पाठान्तरम् । (४) "पद्मरूपा" इति पाठान्तरम् ।

दुरितोच्छेदनविधये मन्त्री दीर्घायुषे च विशदमतिः ।
आयुःकामो जुहुयात् पायसहविराज्यैः केवलाज्यैश्च ॥ ७० ॥
दूर्वाभिः सतिलाभिः सर्वैस्त्रिसहस्रसंख्यकं मन्त्री ।
अथवा त्रिमधुरसिक्तैरब्जैर्जुहुयात् सरोरुहैरयुतम् ॥ ७१ ॥
नष्टश्रीरपि भूयो भवति मनोज्ञः स मन्दिरं लक्ष्म्याः ।
अन्नाद्यर्थमन्नैरपि पालाशैर्ब्रह्मवर्चसे जुहुयात् ।
सर्वैरेतैर्जुहुयात् सर्वफलाप्त्यै द्विजेश्वरो मतिमान् ॥ ७२ ॥
इति परमरहस्यं वेदसारस्य सारं
गदितमज सुराद्यैर्योगिभिर्ध्यानगम्यम् (१) ।
अमुमथ जपहोमध्यानकाले य एवं
भजति स तु विमुक्तः कर्मभिर्मुक्तिमेति ॥ ७३ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे एकोनविंशः पटलः ॥ * ॥

---

(१) "ध्यानागम्यम्" इति पाठान्तरम् ।

## त्रिंशः पटलः ।



अथ वक्ष्यामि विद्यायास्त्रिष्टुभः प्रवरं विधिम् ।
ऋषिच्छन्दोदेवताभिरङ्गन्यासक्रमैः सह ॥ १ ॥
मरीचिः काश्यपो नाम ऋषिश्छन्दः स्वयं स्मृतम् ।
देवता जातवेदोऽग्निरुच्यन्तेऽङ्गान्यतो मनोः ॥ २ ॥
नवभिः सप्तभिः पङ्क्तिभिः सप्तभिश्च तथाष्टभिः ।
सप्तभिर्मूलमन्त्रेण कुर्यादङ्गानि वर्णकैः ॥ ३ ॥
अङ्गुष्ठगुल्फजङ्घासु जानूरुकटिगुह्यके ।
सनाभिहृदयोरोजपार्श्वयुक्पृष्ठकेषु च ॥ ४ ॥
स्कन्धयोरुभयोर्मध्ये बाहुमूलोपबाहुषु ।
प्रकूर्परप्रकोष्ठेषु मणिबन्धतलेषु च ॥ ५ ॥
मुखनासाक्षिकर्णेषु मस्तमस्तिष्कमूर्द्धसु ।
विन्यसेदक्षरान्मन्त्री क्रमान्मन्त्रसमुद्भवान् ॥ ६ ॥
शिखाललाटदृक्कर्णयुगोष्ठरसनासु च ।
सकण्ठबाहुहृत्कुक्षिकटिगुह्योरुजानुषु ।
जङ्घाचरणयोर्न्यस्येत् पदानि त्रिष्टुभः सुधीः ॥ ७ ॥
उद्यद्विद्युत्करालाकुलहरिगलसस्थारिशङ्खासिखेटे-
ष्विष्वासाख्यत्रिशूलानरिगणभयदा तर्जनीश्चादधाना ।
चर्म्मास्युद्गूर्णदोर्भिः (१) प्रहरणनिपुणाभिर्वृता कन्यकाभिः
दद्यात्कार्शानवीष्टांस्त्रिनयनलसिता चापि कात्यायनी वः ॥ ८ ॥
इति विन्यस्तदेहस्तु कुर्याज्जप्यादिकाः क्रियाः ।
दीक्षा प्रवर्त्यते पूर्व्वं यथावद्देशिकोत्तमैः ॥ ९ ॥

(१) "चर्म्मास्युद्गूर्णदोर्भि" इति पाठान्तरम् ।

ततोऽस्त्राकृतिः संप्रोक्ता स्यात्प्रयोगविधिस्ततः ।
दीचकादचराणादौ गत्वाविद्य ततोवहिः ॥ १० ॥
यन्त्रं षड्गुणितं कृत्वा दुर्व्यर्णलसितास्त्रकम् (१) ।
वहिरष्टदलं पद्मं प्रोक्तलचणलचितम् ॥ ११ ॥
अत्र पीठं यजेन्मन्त्री क्रमात् सनवशक्तिकम् ।
जया सविजया भद्रा भद्रकाली सुदुर्मुखी ॥ १२ ॥
व्याघ्रसिंहमुखी दुर्गा विद्दभो नव शक्तयः ।
तत्राधाय घटं गव्यक्वायमूत्रपयोऽम्भसाम् ॥ १३ ॥
एकेन पूरणं कृत्वा आवाह्य च विभावसुम् ।
आहुतेर्व्वहिरग्न्यादिपादाष्टकविनिःसृताः ॥ १४ ॥
मूर्त्तीरभ्यर्चयेदग्नेर्जातवेदादिकाः क्रमात् ।
पृथिव्यम्बुनलेरानम्यात्मनेपदसंयुताम् ॥ १५ ॥
अर्चयेद्दिक्षु कोणेषु निहत्त्यादीर्यथाक्रमम् ।
दिग्स्वेकादशसंस्थाः स्युर्जार्णाद्या वर्णशक्तयः ॥ १६ ॥
लोकपालांश्च तद्देतौविधिनेति समर्चयेत् ।
जागता तपनी वेदगर्भा दहनरूपिणी ॥ १७ ॥
सेन्दुखण्डा शुभहन्त्री सनभधारिणी तथा ।
वागीश्वरी मदवहा सोमरूपा मनोजवा ॥ १८ ॥
मरुद्वेगा रविसंज्ञा (२) तीव्रकोपा यशोवती ।
तोयात्मिका तथा नित्या दयावत्यपि हारिणी ॥ १९ ॥
तिरस्क्रिया वेदमाता तथा स्यादमरप्रिया ।
समाराध्या नन्दिनी च परा रिपुविमर्द्दिनी ॥ २० ॥
षष्ठी च दण्डिनी तिग्मा दुर्गा गायत्रिसंज्ञिका ।
निरवद्या विशालाक्षी ग्लासोद्दाहा च नादिनी ॥ २१ ॥

(१) "दुर्व्यर्णलसितात्मकम्" इति पाठान्तरम् ।
(२) "वायिसंज्ञा" इति पाठान्तरम् ।

वेदना वह्निगर्भा च सिंहवाहाह्वया तथा ।
क्षुर्या दुर्व्विषहा चैव रिरंसा तापहारिणी ॥ २२ ॥
त्यक्तदोषा नि:सपत्ना चत्वारिंशच्चतुर्युता: ।
अभिषिच्य पुन:शिष्यं कुम्भादीन् गुरुराहरेत् ॥ २३ ॥
ईदृशं यन्त्रमारुह्य जपेच्छिष्य: सुयन्त्रित: ।
मन्त्राक्षरसहस्रन्तु सिद्धार्थं गुरुसन्निधौ ॥ २४ ॥
सर्व्वजापेषु चाग्नेय्या गायत्र्या द्विगुणो जप: ।
कर्त्तव्यो वाञ्छितावाप्त्यै रक्षायै कार्य्यसिद्धये ॥ २५ ॥
तिलराज्यऽनलक्षीरवृक्षेध्महविराज्यकै: ।
सर्पि:सिक्तै: क्रमाद्धोम: साधयेदीप्सितं नृणाम् ॥ २६ ॥
चत्वारि चत्वारिंशच्च चतु:शतसमन्वितम् ।
चतु:सहस्रसंयुक्तं प्रोक्तैर्द्रव्यैर्हुतक्रिया ॥ २७ ॥
एवं संसिद्धमन्त्रस्य स्वरस्याद्या: क्रियामता: ।
चत्वारि चत्वारिंशच्च वर्णानामस्तमिष्यते ॥ २८ ॥
प्रलोमपाठो वर्णानामस्तमाहुर्म्मनीषिण: ।
पादाष्टकमिदं विद्यात्ततोऽष्टाङ्गो मनुस्त्वयम् ॥ २९ ॥
जप्तुकामो मनुस्त्वेनं पादांस्तु प्रतिलोमत: ।
जपेत्तथाहि मन्त्रोऽयं चाल्यते दुष्टदूषित: ॥ ३० ॥
आद्या: पञ्चाक्षरा: पादास्त्रय: सप्ताक्षरा: पद: ।
पञ्चमश्चाद्य षष्ठश्च द्वौ तु पादौ षडक्षरौ ॥ ३१ ॥
पञ्चाक्षरौ तदन्तौ च तेषां भावो निगद्यते ।
आद्यं ज्ञानेन्द्रियं कर्म्मं द्वितीयं पाञ्चभौतिकम् ॥ ३२ ॥
तृतीयं धातव: सप्त चतुर्थं वर्णसप्तकम् ।
षड्‌र्म्मय: पञ्चमं स्यात् षष्ठ: षाट्कौशिको मत: ।
सप्तमश्चाष्टम: पाद: शब्दाद्यं वचनादिकम् ॥ ३३ ॥

साङ्गः सप्रतिपत्तिकः सगुरुपदद्वन्द्वप्रणामक्रियो-
जाप्योऽन्त्यादिसदन्तकोऽन्तविगतो वर्णप्रतीपक्रमात् ।
गुर्व्वादेशविधानतश्च विधिवज्ज्ञातो मनुर्मन्त्रिणा
तत्तत्कार्य्यसमाप्तयेऽखिलविपद्ध्वान्तौघभानूदयः ॥ ३४ ॥
अनुलोमजपोऽङ्गानामपि पाठोऽनुलोमकः ।
प्रतिलोमानि तानि स्युः प्रतिलोमविधौ तथा ॥ ३५ ॥
अन्तपादप्रतीपे हि तथा तानि भवन्ति हि ।
वर्णप्रतीपे हि तथा मात्रा च प्रतिलोमके ॥ ३६ ॥
प्रतिपत्तिविशेषांश्च तत्र तत्र विचक्षणः ।
गुर्व्वादेशविधानेन प्रविदध्याद्यथान्यथा ॥ ३७ ॥
जपः पुरोक्तसंख्यः स्याद्धुतक्तृप्तिस्तथा भवेत् ।
क्षीरद्रुचसमिद्व्रीहितिलहव्यहुतैः क्रमात् ॥ ३८ ॥
अथवा पञ्चगव्यौत्थचरुणा हुतमुच्यते ।
प्रत्यङ्मुखेन कर्त्तव्यं प्रायोजपहुतादिकम् ॥ ३९ ॥
तत्र स्युर्मन्त्रवर्णेभ्यस्तावत्यो वह्निदेवताः ।
प्रत्येकमाहुतास्तासु पञ्चकेन नतभ्रुवाम् ॥ ४० ॥
तत् पञ्चकञ्च प्रत्येकमाहुतं पञ्चभिः पृथक् ।
प्रत्येकं पञ्चकानाञ्च षोडशाहुतिरिष्यते ।
प्रत्येकं षोडशानाञ्च कोटयः परिचारिकाः ॥ ४१ ॥
इत्येकाक्षरजात् पूर्व्वादेकस्मात् षोडशात्मकात् ।
एतावत्यस्तु जातास्तद्विस्तारं पुनरूहयेत् ॥ ४२ ॥
तत्र त्विन्द्रियजाः प्रोक्ता देवतास्तूर्द्ध्वदृष्टयः (१) ।
तिर्य्यञ्चो भौतिकाः प्रोक्ता धातूत्थास्तु भयाननाः ॥ ४३ ॥
ऊर्म्मिजास्तूर्द्ध्ववदनास्तिर्य्यञ्चश्चाथ कोशजाः ।
क्लीबा मुखद्वयोपेता गोचरोत्थाः स्त्रियो मताः ॥ ४४ ॥

(१) "देवतास्त्वर्द्धदृष्टय." इति पाठान्तरम् ।

अधोमुखाश्च तिर्य्यञ्च इत्युक्तो मूर्त्तिसंग्रहः ।
आभिः सर्व्वाभिरपि च शिखाभिर्जातवेदसः ॥ ४५ ॥
व्याप्यते परराष्ट्रेषु वृक्षगुल्मलतादिकम् ।
आरम्भे मानुषाणि स्युर्नक्षत्राण्यभिचारिके ।
कर्म्मण्यासुरभानि स्युर्दैवानि स्युस्तथा हुतौ ॥ ४६ ॥
अन्त्याश्वीन्द्वर्कादितिगुरुहरिमित्रानिलाह्वा दैवाः ।
पूर्व्वोत्तरत्रयीयमहरविधयो मानुषाः परेऽसुरभाः ॥ ४७ ॥
नन्दास्वारभ्य रिक्तासु प्रयोज्यात्मनि संहरेत् ।
भद्रासु संग्रहं कुर्य्याज्जयासु तु विशेषतः ॥ ४८ ॥
आरेणारभ्य मन्देन प्रयोज्यादित्यवारके ।
संहरेत् संग्रहं कुर्य्याद्वारे त्वाचार्य्ययोः सुधीः ॥ ४८ ॥
चरैर्व्विहृन्योभयकैराहरेदभ्यसेत् स्थिरैः ।
दिनास्तं दिनकृद्युक्तं चारग्रहसमन्वितम् ॥ ५० ॥
कृत्तिकादि च कृत्यान्तं कृत्यास्तं जातवेदसः ।
नक्षत्रात्मा हुताशः स्यात्तिथ्यात्मेन्दुरुदाहृतः ॥ ५१ ॥
ताभ्यां करोति दिनकृद्विसर्गादानकर्म्मणी ।
इत्येष निपुणो मन्त्री प्रयोगादन्यथात्महा ॥ ५२ ॥
रक्षानिग्रहकर्म्मणोरनुपराग्वक्त्राप्रधानाकृति
प्रख्या मन्त्रविधानविच्च दिशि दिश्येकादशैकादश ।
संस्थाप्य क्रमशोऽक्षरोदितरुचीः प्रत्नोर्जपेद्वा मनुं
मय्यग्ना जुहुयादनु प्रतिगतोमिर्द्दैर समाराधयेत् ॥ ५३ ॥
पीताश्योमुद्दिशदाहस्ता मह्यिषाण्यमयुतपुष्पार्कैः ।
वैभीतकारिष्टसमित्कोद्रवकैः स्तम्भयेच्च हुतविधिना ॥ ५४ ॥
सुषिता पाशाङ्कुशयुग्विगमदारिप्रवाहमभिधा ।
वैतसमसिदाहुत्या मधुरयुजा मङ्क्षु वशयेद्दुर्गां ॥ ५५ ॥

साङ्गः सप्रतिपत्तिकः सगुरुपङ्क्तप्रणामक्रियो-
जाप्योऽग्न्यादिसदन्तकोऽन्तविगतो वर्णप्रतीपस्तथा ।
गुर्व्वादेशविधानतश्च विधिवद्यातो मनुर्मन्त्रिणा
तत्तत्कार्य्यसमाप्तयेऽखिलविपद्ध्वान्तौघभानूदयः ॥ ३४ ॥
अनुलोमजपोऽङ्गानामपि पाठोऽनुलोमकः ।
प्रतिलोमानि तानि स्युः प्रतिलोमविधौ तथा ॥ ३५ ॥
अन्तपादप्रतीपे हि तथा तानि भवन्ति हि ।
वर्णप्रतीपे हि तथा मात्रा च प्रतिलोमके ॥ ३६ ॥
प्रतिपत्तिविशेषांश्च तत्र तत्र विचक्षणः ।
गुर्व्वादेशविधानेन प्रविदध्यात्त्वचान्यथा ॥ ३७ ॥
जपः पुरोक्तसंख्यः स्याद्धुतक्रमस्तथा भवेत् ।
क्षीरद्रुसमिद्व्रीहितिलद्रव्यघृतैः क्रमात् ॥ ३८ ॥
अथवा पञ्चगव्योत्थचरुणा हुतमुच्यते ।
प्रत्यङ्मुखेन कर्त्तव्यं प्रायोजपहुतादिकम् ॥ ३९ ॥
तत्र स्युर्मन्त्रवर्णेभ्यस्तावत्यो वह्निदेवताः ।
प्रत्येकमावृतास्तास्तु पञ्चकेन नतभ्रुवाम् ॥ ४० ॥
तत् पञ्चकञ्च प्रत्येकमावृतं पञ्चभिः पृथक् ।
प्रत्येकं पञ्चकानाञ्च षोड़शावृत्तिरिष्यते ।
प्रत्येकं षोड़शानाञ्च कोटयः परिचारिकाः ॥ ४१ ॥
इत्येकाक्षरजात् पूर्व्वादिकस्मात् षोड़शात्मकात् ।
एतावत्यस्तु जातास्तद्विस्तारं पुनरूहयेत् ॥ ४२ ॥
तत्र त्विन्द्रियजाः प्रोक्ता देवतास्तूर्द्ध्वदृष्टयः (१) ।
तिर्य्यञ्चो भौतिकाः प्रोक्ता धातूत्थास्तूभयाननाः ॥ ४३ ॥
ऊर्म्मिजास्तूर्द्ध्ववदनास्तिर्य्यञ्चश्चाथ कोशजाः ।
कौषा मुखद्वयोपेता गोचरोत्थाः स्त्रियो मताः ॥ ४४ ॥

---

(१) "देवतास्त्वर्द्धदृष्टयः" इति पाठान्तरम् ।

अधोमुखाय तिर्य्यग्स इत्युक्तो मूर्त्तिसंग्रहः ।
आभिः सर्व्वाभिरपि च शिखाभिर्जातवेदसः ॥ ४५ ॥
व्याप्यते परराष्ट्रेषु हृचगुल्मलतादिकम् ।
आरम्भे मानुषाणि स्युर्नक्षत्राण्याभिचारिके ।
कर्म्मण्यासुरभानि स्युर्देवानि स्युस्तथा हुतौ ॥ ४६ ॥
अन्त्याश्वीन्द्वर्कादितिगुरुहरिमित्रानिलाह्वा देवाः ।
पूर्व्वोत्तरत्रयीयमहरविषयो मानुषाः परेऽसुरभाः ॥ ४७ ॥
नन्दास्वारभ्य रिक्तासु प्रयोज्यात्मनि संहरेत् ।
भद्रासु संग्रहं कुर्य्याज्जयासु तु विशेषतः ॥ ४८ ॥
आरेणारभ्य मन्देन प्रयोज्यादित्यवारके ।
संहरेत् संग्रहं कुर्य्याद्वारे त्वाचार्य्ययोः सुधीः ॥ ४९ ॥
चरैर्व्विसृज्योभयकैराहरेदभ्यसेत् स्थिरैः ।
दिनास्त्रं दिनक्षद्युक्तं चारग्रहसमन्वितम् ॥ ५० ॥
कृत्तिकादि च कृत्यान्तं कृत्यास्त्रं जातवेदसः ।
नक्षत्रात्मा हुताशः स्यात्तिथ्यात्मेन्दुरुदाहृतः ॥ ५१ ॥
ताभ्यां करोति दिनकृद्विसर्गादानकर्म्मणी ।
इत्येष निपुणो मन्त्री प्रयोगादन्यथात्महा ॥ ५२ ॥
रक्षानिग्रहकर्म्मणोरनुपराग्वक्त्राप्रधानाकृति
मध्या मन्त्रविधानविच्च दिशि दिश्येकादशैकादश ।
संस्थाप्य क्रमशोऽक्षरोदितरुचीः शक्तीर्जपेद्वा मनुं
सम्यग्वा जुहुयादनु प्रतिशतीसिद्धैः समाराधयेत् ॥ ५३ ॥
पीताऽयोमुष्टिगदाहस्ता मद्दिषाज्यसयुतपुलाकैः ।
वैभीतकारिष्टसमिल्कोद्रवकैः स्तम्भयेच्च हुतविधिना ॥ ५४ ॥
सुषिता पाशाङ्कुशयुग्विगलद्दारिप्रवाहसम्भिन्ना ।
वैतससमिदाहुत्या मधुरयुजा मङ्क्षु वशयेद्दुर्गा ॥ ५५ ॥

रक्ता पाशाङ्कुशिनी निशि फलिनीकेसरोद्भवैः पुष्पैः ।
चन्दनरससंसिक्तैर्होमाद्दुर्गा वशीकरोति जगत् ॥ ५६ ॥
लवणैस्त्रिमधुरसिक्तैस्तत्क्षतया वा जुहोतु पुत्तल्या ।
उडुतरुकाष्ठैर्नक्तं सप्ताहान्नृपतिमपि वशे कुरुते ॥ ५७ ॥
सकपालशूलपाशाङ्कुशहस्ताऽरुणतरा तथा दुर्गा ।
आकर्षयेच्च लावणपुत्तल्या त्रिमधुराक्तया होमात् ॥ ५८ ॥
ध्यात्वा धूम्रां मुसलत्रिशिखकरामरिभिय तीक्ष्णाक्षैः ।
कार्पासानां निम्बच्छदमेपद्रुते(१)र्हुताच्च विद्वेषः ॥ ५९ ॥
धूम्रा तर्जनिशूलाङ्कितहस्ता विषदलैः समाहिपाज्यैः ।
होमाच्च मरिचसर्षपचरुभिरजारुधिरसेचितैरटयेत् ॥ ६० ॥
शिखिशूलकराग्निनिभा सर्षपतैलाक्तमत्तबीजैश्च ।
मरिचैर्वा राजियुतैर्होमादहितान् विमोहयेद्दुर्गा ॥ ६१ ॥
कृष्णा शूलासिकरा रिपुदिनवृक्षोद्भवैः समिद्वरैः
व्रणकृद्घृतसंसिक्तैर्होमान्मारयति मासतो दुर्गा ॥ ६२ ॥
नक्षत्रवृक्षसमिधो मरिचानि च तीक्ष्णाहिङ्गुशकलानि ।
मारणकर्मणि विहितान्यारुष्करस्नेहसिक्तानि ॥ ६३ ॥
नक्षत्रवृक्षसमिधां विलिखितसाध्याभिधानकर्मवताम् ।
सचतुश्चत्वारिंशत्तत्त्वयुजां होमकर्म मारणकरम् ॥ ६४ ॥
मरिचं क्षौद्रसमेतं प्रत्यक्पुष्पीपरागसम्भिन्नम् ।
उष्णाम्भःपरिलुलितं प्रसेचयेद्वृक्षवृक्षपुत्तल्या ॥ ६५ ॥
हृदये वदने च रिपोः सम्मुखतः संप्रतिष्ठिते वायोः ।
जूर्त्यभिभूतोऽरिः स्यात्तत्क्षयनात् पक्षमात्रकान्म्रियते ॥ ६६ ॥
सैव प्रतिकृतिरसकृत्तत्प्रतिष्ठितसमीरणा च विशदधिया ।
तीक्ष्णस्नेहालिप्ता विन्मोमजापेन तापनीयाग्नौ ॥ ६७ ॥

---

(१) "निम्बच्छेदमेपद्रुते." इति पाठान्तरम् ।

विधिना ज्वरविद्ध: स्यादपद्यनहोमेन हानिरङ्गस्य ।
सर्व्वाहुत्या मरणं प्राप्नोति रिपुर्न तत्र सन्देह: ॥ ६८ ॥
प्राक्प्रोक्तान् भूतवर्णान् दशदशयुगशो विन्दुयुक्तान्नमोऽन्तान्
योनेर्मध्यास्त्रिमध्येष्वपि पुनरथ संस्थाप्य भूताभवर्णान् ।
वर्णैस्तै: साकमस्त्रैर्मनुमपि कुलिशाद्यै: स्वचिह्नै: समेतं
कुर्य्यात् कर्म्माणि सम्यक् पटुविशदमति: स्तम्भनाद्यानि मन्त्री ॥ ६९ ॥
उदन्नादिलला: कोणासी चतुर्थार्णकावसी धाराम् ।
हव्ये द्वितीयरचा वह्निरदन्दयोनिकादियसा: ॥ ७० ॥
मरुत: कपोलविन्दुकपञ्चमवर्णा: मही तथा व्योम्न: ।
मनुषु परेष्वपि मन्त्री करोतु कर्म्माणि तस्य संसिद्धै ॥ ७१ ॥
उन्मत्तच्छेलनैवद्रुमभवसमिधां सप्तसाहस्रकान्तं
प्रत्येकं राजितैलालुलितमथ जुहेन्माहियाज्याप्लुतं वा ।
कृष्णाष्टम्याद्यमेवं सुनियतचरित: सप्तरात्रं निशायां
नि:सन्देहोऽस्य शत्रुस्त्यजति किल निजं देहमाविष्टमोह: ॥ ७२ ॥
सामुद्रे च सहिंगुजीरकविषै: साध्यर्च्चद्वन्द्वाकृतिं
कृत्वाधोवदनां जले घटकटाहादिस्थिते क्वाथयेत् ।
सप्ताहं ज्वलनं जपन् विपतरोर्यष्ट्या शिरस्ताडनं
कुर्व्वन् सप्तदिनान्तरे यमपुरक्रीड़ापर: स्यादरि: ॥ ७३ ॥
अर्कस्यन्दनशदपद्मगमुखशस्ताद्रिमाशास्वरं
न्यग्वक्त्रं तिलजाप्लुत विषहतं दीप्तं करैर्भास्वत: ।
वायुप्रेरितवह्निमण्डलमहाज्वालाकुलास्यादिकं
ध्यायन् वैरिणमुत्क्षिपेत् जलममुं मन्त्रं जपन् मृत्यवे ॥ ७४ ॥
आर्द्रायुक्तोऽग्निमनुना त्वथ सप्तरात्रं
सिद्धार्थतैललुलितैर्मरिचैर्जुहोतु ।
आरभ्य विष्टिदिवसेऽरिनर: प्रलाप-
मूर्च्छान्वितेन विषयीक्रियते ज्वरेण ॥ ७५ ॥

तालस्य पत्रे भुजगचक्रे वा मध्ये लिखेत् साध्यनराभिधानम् ।
अथाभितो मन्त्रमिमं विलोमं विलिख्य भूमौ विनिखन्य तत्र ॥ ७६ ॥
आधाय वैश्वानरमादरेण समर्च्य सम्यग्घ्नरिचैर्जुहोतु ।
तीव्रो ज्वरस्तस्य भवेत् पुनस्तत्तोये क्षिपेदश्नतमः स भूयात् ॥ ७७ ॥
सिद्धस्त्वा शरनिकरैः कृशानुवक्त्रैर्धावन्तीं रिपुमनुधावमानमेनाम् ।
संचिन्त्य क्षिपतु जलं दिनेशबिम्बे जप्त्वामुं मनुमपि चाटनाय शीघ्रम् ॥७८॥
कृत्वा स्थण्डिलमण्डले भगवतीं न्यासक्रमादर्चयेद्
गन्धाद्यैः पुनरन्धसा च विकिरेन्मन्त्री निशायां बलिम् ।
जप्त्वा मन्त्रममुं च रोगसहिताः कृत्वा निकृत्या कृता-
स्तांस्तान् भूतपिशाचवैरिविहितान् दुःखानसौ नाशयेत् ॥ ७९ ॥
विधिवदभिज्वाल्यानलमन्त्वहमाराध्य गन्धपुष्पाद्यैः ।
सन्ध्यासु जपाद्य मनुरयमाकाङ्क्षितसर्वसिद्धिकल्पतरुः ॥ ८० ॥
कुसुमरसलुलितलोणैर्व्वारुणवदनो जुहोतु सन्ध्यासु ।
मन्त्रार्णसख्यमग्नेरेकेन द्रावयेदरीनचिरात् ॥ ८१ ॥
शुद्धैश्च तण्डुलैरथ हविरपि निष्पाद्य पञ्चगव्यमपि ।
सघृतेन तेन जुहुयादष्टसहस्रं समेतसम्पातम् ॥ ८२ ॥
प्राशितसम्पातस्य स्याद्रक्षा सर्व्वथैव साध्यस्य ।
प्राङ्गणमन्दिरयोरपि निखनेत् द्वारेऽवशिष्टसम्पातम् ॥ ८३ ॥
कृत्वा नश्यति तस्य वौषितेन ग्रहादयो भीत्वा ।
कर्त्तारमेति कुपिता कृत्वा सर्व्वात्मना च नाशयति ॥ ८४ ॥
वह्मद्रुमफलकान्ते मन्त्रितमः सप्तसप्तकोष्ठयुते ।
कोणोदराणि हित्वा मायाबीजं सकाम मध्यगते ॥ ८५ ॥
विलिखेत् क्रमेण मन्त्राक्षराय शिष्टेषु तेषु कोष्ठेषु ।
तत्र मरुतः प्रतिष्ठां विधाय निधाय वह्निमपि जुहुयात् ॥ ८६ ॥
आज्येनाष्टसहस्र फलकोपरि सम्यगात्तसम्पातम् ।
विप्रतिपत्तिधरायां निखनेत्प्रशाम्यन्त्युपद्रवाः सद्यः ॥ ८७ ॥

सिकताचरुगव्याश्मकमृदां प्रतिष्ठा विधीयते सिद्ध्यै ।
प्रस्थाढ़कघटमाना गृहपुरराष्ट्राभिगुप्तये सिकता: ॥ ८८ ॥
मध्येऽष्टाशान्तासु च कुण्डानामारचय्य नवकमपि ।
विधिना निवपेत् क्रमश: सिंहधनुष्कागयायिनि दिनेशे ॥ ८९ ॥
तिथिषु च (१) कालाष्टम्यां भेषु विशाखाग्निमूलभाग्येषु ।
वारेषु मन्दवाक्पतिवर्जा: सर्व्वे प्रशस्ता तथा ॥ ९० ॥
हस्तत्र्यवणमघासु प्राजापत्ये च कर्म कुर्व्वीत ।
द्वादशसहस्रसंख्यं प्रजपेद्गायत्रमपि यथोक्तम् ॥ ९१ ॥
मध्ये च मूलमनुना तदायुधैरष्टदिक्षु चक्राद्यै: ।
सकपालान्तै: पृथगपि संस्थापनकर्म्म निगदितं विधिवत् ॥ ९२ ॥
तास्ताश्च देवता अपि परिपूज्य यथाक्रमेण मन्त्रितम: ।
कुर्य्याद्बलिं दिनग्रहकरणेभ्यो लोकपालराशिभ्य: ॥ ९३ ॥
सिकतापोड़शकुड़वं ब्रह्मद्रुमभाजनेऽम्बगव्याक्तम् ।
निर्वपति यदि विधिना तं देशं ग्रामं करोति चतुरब्दात् ॥ ९४ ॥
अर्केऽजस्थेऽब्धिगायामपरिमितजलायां समादाय शुद्धा:
सम्यक् संशोषयित्वातपमनु सिकता: शूर्पकोणैर्विशोध्य ।
संशुद्धे पञ्चगव्ये सुमतिरथ विनि:क्षिप्य ता: कुम्भसंस्था
मन्त्राग्नौ मन्त्रजापी द्विजतरुसमिधा भर्ज्जयेत् कार्य्यहेतो: ॥ ९५ ॥
एवं मृदुपलयोरध: संस्थाप्यन्ते सपञ्चगव्यास्ता: (२) ।
वसुधाविप्रतिपत्तिक्षयञ्च पुष्टिञ्च कुर्व्वते क्रमश: ॥ ९६ ॥
रथचरणदरगदाम्बुजहस्ता निष्टप्तशातकुम्भनिभा ।
सघृतपयोऽन्धोहोमान्महतीं लक्ष्मीं समावहेद्दुर्गा ॥ ९७ ॥
व्रीहिभिरन्नै: क्षीरै: समिद्भिरपि दुग्धवीरुधामाज्यै: ।
मधुरत्रयमधुरैर्महतीमृद्धिं करोति हुतविधिना ॥ ९८ ॥

(१) "रात्रिषु च" इति पाठान्तरम् ।
(२) "एवं मृदुपलचरवः संस्थाप्यन्ते सपञ्चगव्यास्ते" इत्यपि पाठान्तरं दृश्यते ।

यद्यद्वाञ्छति पुरुषस्तत्तदमुष्य प्रभावतः साध्यम् ।
सग्रहनक्षत्राढ्यां सगिरिपुरग्रामकाननां वसुधाम् ॥ ९९ ॥
साब्धिभ्रुपोपलमुर्दधिं दहति हि मतिमानयन्नमेतेन ।
एवं प्रोत्थापयति च मन्त्रेणानेन निशितधीर्मन्त्री ।
पुंसा केन कियद्वा मन्त्रस्याख्यायतेऽस्य सामर्थ्यम् ॥ १०० ॥

तस्मादेनं मनुवरमभीष्टाप्तये संयतात्मा
जप्यान्नित्यं सहुतविधिमप्यादरादर्चयीत ।
भक्त्या कुर्य्यात् सुमतिरभिषेकादिकं कर्म्मजातं
कर्त्तुं वान्यत् प्रवणमतिरत्नैव भक्तः सदा स्यात् ॥ १०१ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे त्रिंशः पटलः ॥ * ॥

---

## एकत्रिंशः पटलः ।

अथाभिवक्ष्ये महितस्य मन्त्रस्यानुष्टुभः संग्रहतो विधानम् ।
ऋष्यादिकैरङ्गपदैर्यथावद्दीक्षाजपार्चाहवनक्रमेण ॥ १ ॥
ऋषिरभिहितो वशिष्ठश्छन्दोऽनुष्टुप् च देवता रुद्रः ।
त्र्यम्बकपदादिकैः स्यान्मनुनामुनैव षडङ्गक्लृप्तिरिह कथिता ॥ २ ॥
त्रिभिस्तु वर्णैर्हृदयं शिरश्च चतुर्भिरष्टाभिरथो शिखा च ।
उक्तं नवार्णैः कवचं तथाक्षि पञ्चार्णकं त्र्यम्बकमस्त्रमाहुः ॥ ३ ॥
चरणाग्रसन्धिगुह्याधारोदरहृदयकन्धरेषु पुनः ।
बाह्वोः सन्ध्यग्रास्यघ्राणदृक्श्रुतिभ्रूशीर्षेषु ॥ ४ ॥
वर्णान् न्यस्य शिरोभ्रूदृग्वक्त्रगलहृदुदरगुह्येषु ।
ऊर्वोर्जान्वोः पदयोः पदैश्च मनुवित् क्रमेण विन्यस्येत् ॥ ५ ॥
अच्छः स्वच्छारविन्दस्थितिरुभयकराङ्कस्थितं पूर्णकुम्भं
द्वाभ्यां वेदाक्षमाले निजकरकमलाभ्यां घटौ नित्यपूर्णौ ।
द्वाभ्यां तौ च स्रवन्तौ शिरसि शशिकलावम्बुरे प्लावयन्तौ
देहं देवो दधानः प्रदिशतु विशदाकल्पजातः श्रियं वः ॥ ६ ॥
प्रासादोक्ते च पीठे गव्यैर्वा दुग्धतरुकषायैर्वा ।
संपूर्य कलशमस्मिन् महेशमावाह्य पूजयेद्भक्त्या ॥ ७ ॥
अङ्गैराद्यार्काद्यैः पुनरावृतिरष्टभिर्द्वितीया स्यात् ।
मन्त्रार्णशक्तिभिः स्युः पुनश्चतस्रो दिगाधिपवज्राद्यैः ॥ ८ ॥
अर्केन्दुधरणितोयानलेरवियदात्मसंज्ञकास्ते च ।
आनुष्टुभमित्यष्टावरणं प्रोक्तं विधानवरमेवम् ॥ ९ ॥
रमा राका प्रभा ज्योत्स्ना पूर्णोषा (१) पूरणी सुधा ।
विश्वा विद्या सिता प्रह्वा सारा सत्या (२) शिवा निशा ॥ १० ॥

(१) "ज्योत्स्नापूर्णोषा" इति पाठान्तरम् । (२) "सन्ध्या" इति पाठान्तरम् ।

आर्द्रा प्रज्ञा परा मेधा कीर्त्तिः (१) शान्तिर्धृतिर्मतिः ।
धरोमा पावनी पद्मा शान्ताऽमोघा जयाऽमला ॥ ११ ॥
द्वात्रिंशदिति निर्दिष्टाः शक्तयोऽनुष्टुभः क्रमात् ।
शिवानुभावतो नित्यं जगदाप्याययन्ति याः ॥ १२ ॥
इति परिपूज्य महेशं कलशजलैः समभिषेचयेच्छिष्यम् ।
कनकाद्यकरन्नाद्यैर्गुरुमपि परिपूज्य मनुमतः सिद्धैः (२) ॥ १३ ॥
प्रजपेन्नचाप्तत्या द्रव्यैर्जुहुयाज्जपावसाने च ।
बिल्वपलाशौ खदिरवटसिद्धार्थदौग्धदुग्धानि ॥ १४ ॥
दधि दूर्व्वेति दशैतान्याज्यसमेतानि होमवस्तूनि ।
एकैकशः सहस्रं दशभिर्हुत्वा प्रतर्प्य विप्रांश्च ।
भवति नरः सिद्धमनुर्मन्त्रेण च सर्व्वकर्मकर्त्ता स्यात् ॥ १५ ॥
बिल्वैरयुतं हुत्वा महतीं लक्ष्मीमवाप्नुयाद्विप्रः ।
तावद्भिर्द्विजवृक्षैर्द्विजः श्रियं पुष्कलामवाप्नोति ॥ १६ ॥
खदिरसमिदयुतहोमात्तेजोबलपुष्टिमाप्नुयादिष्टाम् ।
न्यग्रोधायुतहोमाद्धनधान्यसमृद्धिमेति न चिरेण ॥ १७ ॥
अयुत तिलैः प्रजुह्वन्नपमृत्योः पाप्मनो विमुक्तः स्यात् ।
सिद्धार्थायुतहोमैर्वैरिणमपमृत्युमपि विनाशयति ॥ १८ ॥
पायसहुतेन परमां रमामथायुर्यशो लभेन्मर्त्यः ।
दुग्धहुताच्छान्तिः स्यात् परकृत्या नश्यति श्रिय लभते ॥ १९ ॥
दधिहोमतोऽन्नवान् स्यात् संवननकरं च तद्वदन्ति बुधाः ।
दूर्व्वायुतेन जुह्वन् रोगान्निर्व्वास्य सर्व्वमपमृत्युम् ।
गर्व्वितधीरप्यद्धा विप्रवरः सर्व्वथा शतं जीवेत् ॥ २० ॥

---

(१) "क्षान्ति" इति पाठान्तरम् ।
(२) "सिद्धम" इति पाठान्तरम् ।

निजजन्मदिने पयोऽम्भसा वा शतवीर्य्याविततैः पयोहुताशैः ।
जुहुयाच्च शतं च विंशतिं यः स लभेदायुररोगितां चिराय ॥ २१ ॥

काश्मर्यदारुसमिधां त्रिशतं समेत-
सर्पिः पयोऽन्नसहितं त्रिदिनं जुहोतु ।
विप्रान् प्रतर्प्य च गुरून् परिपूज्य सम्य-
ग्दीर्घं विमुक्तगदमायुरवाप्तुकामः ॥ २२ ॥

स्नात्वा चार्कमुखोऽम्भसि स्थित इमं मन्त्रं सहस्रं जपे-
दायुष्यं प्रतिपर्व्व दुग्धहविषा होमो महाश्रीप्रदः ।
लाजाभिर्निजवाञ्छिताय हवनात् कन्याशु संदीयते
स्वाद्वन्नस्तनजद्रुहोमविधिना वर्णान् वशे स्थापयेत् ॥ २३ ॥

गायत्रिवर्णपरिपूर्णतनुश्च भानु-
स्त्रिष्टुब्विशिष्टमहिमा सहितः कृशानुः ।
आनुष्टुभाक्षरसमग्ररुचिः शशाङ्को
दद्युः समुद्यतममी परिवाञ्छितं वः ॥ २४ ॥

एभिस्त्रिभिर्मनुवरैस्तु शताक्षराख्यो
मन्त्रोऽभिकाङ्क्षितफलाप्तिदकामधेनुः ।
प्रोक्तो हिताय जगतां मुनिभिः कृपार्द्र-
चित्तैर्यथोक्तमथ संग्रहतो वदामि ॥ २५ ॥

ऋष्याद्याः पूर्व्वोक्तास्त्रिविधाः स्युर्हृच्चयोदशभिर्व्वर्णैः ।
शिर एकादशभिश्च द्वाविंशद्भिस्तथा शिखा कवचम् ॥ २६ ॥
नयनं पञ्चदशार्णैः ससप्तभिर्दशभिरस्त्रमङ्गविधिः ।
विन्यासश्च मनूनां मन्त्रज्ञः पूर्व्ववत् क्रमात् कुर्य्यात् ॥ २७ ॥

अर्त्तव्याखिललोकवर्त्ति सततं यज्जङ्गमं स्थावरं
व्याप्तं येन च यत्प्रपञ्चविहितं मुक्तिश्च यत्संहिता ।
यद्वा स्यात् प्रणवत्रिभेदगहनं श्रुत्या च यद्गीयते
तद्वः काङ्क्षितसिद्धयेऽस्तु परमं ज्योतिस्त्रयीशं महः ॥ २८ ॥

लक्षायतो जपविधिः शताक्षरस्याथ होमविधिरुक्तः ।
अयुतावधिको द्रव्यं दोग्धान्नं सर्पिषा समायुक्तम् ॥ २९ ॥
सौरे पीठे पूजाप्रोक्तैरङ्गैः समावृतिः प्रथमा ।
ब्रह्मादिन्याद्याभिस्त्रिस्रः प्रोक्ताः क्रमात् समाहृतयः ॥ ३० ॥
पञ्चम्यावृतिरुक्ता त्रैष्टुभ इव जागतादिभिस्तदनु ।
स्याच्च रमादिभिरावृतिचतुष्कमुक्त दशम्ययेन्द्राद्यैः ॥ ३१ ॥
इति शताक्षरमन्त्रसमर्चना निगदितेह दशावरणायुधैः ।
प्रभजतामभिकाङ्क्षितसिद्धये निखिलसंसृतिमोचपदाप्तये ॥ ३२ ॥
दुग्धाक्तैर्जुहुयात् सहस्रममृताकाण्डैस्तु दीर्घायुषे
दूर्वाणां वितयैस्तथा घृतपयःसिक्तैर्घृतेनैव वा ।
लक्ष्म्यै कोकनदैश्च शोणरुचिभिस्त्रिस्वादुयुक्तैस्तथा
रक्तोत्पलकैस्तदङ्घ्रि विकचैर्बिल्वैः प्रसूनैरपि ॥ ३३ ॥
अनुदिनमथ शान्त्यै (१) संयताक्ता सहस्रं
प्रतिजुहुतु तिलैर्वा मन्त्रविन्मासमेकम् ।
अपि दिनकरसंख्यान् भोजयीत द्विजातीन्
विविधरसविशिष्टैर्भक्तितो भोज्यजातैः ॥ ३४ ॥
शतं शतं प्रातरतन्द्रितोद्यतो जपेद्द्विजो मन्त्रमसुं शताक्षरम् ।
आरोग्यजुष्टं बहुलेन्द्रियायुतं शतं प्रजीवेच्छरदां सुखेन सः ॥ ३५ ॥
प्रणवव्याहृताद्या व्याहृतितारान्तिका च मन्त्रिवरैः ।
जप्या शताक्षरी स्यादिह परलोकप्रसिद्धये दिनशः ॥ ३६ ॥
अनुमसुमथ शान्त्यै तत्पदाद्यं प्रजप्याद्-
गदगणरहितायाप्यायुषेऽनुष्टुवाद्यम् ।
विमलमतिररातिध्वंसने त्रिष्टुवाद्यं
दिनमनु दिनयक्ते वत्सरं संयताक्ता ॥ ३७ ॥

---

(१) "अनुदिनमथशान्त्यै" इति पाठान्तरम् ।

शताक्षरमनोरयं क्रम उदीरितः संग्रहा-
ञ्जजेदमुमतन्द्रितो दिनश एव मन्त्री रहः ।
अभीष्टफलसिद्धये सुयशसे च दीर्घायुषे-
ऽप्यशेषजनरञ्जनाय चिरमिन्दिरावाप्तये ॥ ३८ ॥

संवादसूक्तविहितं विधानमथ साङ्गदेवतारूपम् ।
वक्ष्यामि साधकानामनुदिनमभिवाञ्छितप्रदानकरम् ॥ ३९ ॥
ऋषिरपि संवलनोऽस्यानुष्टुप् सत्रिष्टुबुच्यते छन्दः ।
संवादाद्यः प्रोक्तः संज्ञानाद्यश्च देवता चाग्निः ॥ ४० ॥
ब्रह्माख्यो हृदयमनुः शिरश्च विष्णूरुद्रः स्यादिह तु शिखिश्वरश्च वर्म्म ।
नेत्रत्वे भवति सदाशिवस्तथास्त्रं सर्व्वात्मेत्यथ कथितं षडङ्गमेवम् ॥ ४१ ॥

धवलनलिनराजचन्द्रमध्ये निषण्णं
करविलसितपाशं साङ्कुशं साभयञ्च ।
सवरदममलेन्दुक्षीरगौरं त्रिनेत्रं
प्रणमत सुरवक्त्रं मङ्क्षु संवादयन्तम् ॥ ४२ ॥

सहस्रकाणां दशकैश्चतुर्भिरथो सहस्रैश्च चतुर्भिरन्वितम् ।
जपेन्मनुं सम्यगथाभिदीक्षितः पयोऽम्बसाऽन्ते जुहुयाद्दशांशकम् ॥ ४३ ॥
यजेत् पुराङ्गैश्च तदर्च्चनाविधौ पुनर्द्वितीयावरणेऽग्निमूर्त्तिभिः ।
अनन्तरञ्च त्रिदशेश्वरादिभिः क्रमेण वह्निं विधिनेति पूजयेत् ॥ ४४ ॥
संवादसूक्ते विधिनेत्यनेन संसाधिते कर्म्म करोतु मन्त्री ।
चतुःशतञ्चापि दशोत्तरेण चतुश्चतुष्कं प्रजपेद्दिनेच ॥ ४५ ॥
पायसेन मधुरत्रयभाजा विप्रराजतरुजैः कुसुमैर्व्वा ।
सर्पिषा स्तनजहव्यसमिद्भिर्व्वाञ्छितार्थविषये प्रजुहोतु ॥ ४६ ॥
जुहुयात् कलाचतुष्कैः प्रत्यृचमायोज्य कादिवर्गचतुष्कैः ।
तद्वच्च यशलाद्यैर्व्वर्णैः संयोज्य पूर्व्वसंख्यकं मतिमान् ॥ ४७ ॥
तद्वद्दचं प्रतियोज्य विष्टुप्पादांश्च पूर्व्वसंख्येन ।
जुहुयात् सर्पिःसिक्तं पायसमचिरेण कार्य्यसमवाप्त्यै ॥ ४८ ॥

प्रतिपादमथार्कपादे प्रतियोन्य जुहोतु पूर्ववन्मतिमान् ।
तेनाभीष्टावाप्तिर्नचिरेण नरस्य हस्तगता ॥ ४९ ॥
अथचरपादविहृष्टुवृयुक्तैः सूक्तैस्तु पूर्वसंख्येन ।
जुहुयात् समाजरूपं संवादयितुं प्रतर्पयेद्वाद्भिः ॥ ५० ॥
उद्दिश्य यद्यदिह मन्त्रितमो जुहोति
सूक्तैरमीभिरुदितैस्त्रिविधैश्च मन्त्रैः ।
व्यस्तैर्यथाविभवतो विधिवत् समस्तै-
स्तत्तस्य सिध्यति समग्रमयत्नमेव ॥ ५१ ॥
रुग्वारुणी भुवाख्याता या सा त्रिष्टुब्निगद्यते ।
ऋषिर्वसिष्ठस्त्रिष्टुप् च छन्दो वारीट् च देवता ॥ ५२ ॥
अष्टभिः सप्तभिः षड्भिः पुनस्तावद्भिरक्षरैः ।
षडङ्गानि विधेयानि तन्मन्त्रसमुदीरितैः ॥ ५३ ॥
अङ्गुल्यग्रससन्धिपायुशिवसंज्ञाधारनाभिद्वयी
कुक्षौ पृष्ठहृदोरुरोजगलदोःसन्ध्यग्रवक्त्रेषु च ।
गण्डघ्राणविलोचनश्रवणयुग्भ्रूमध्यमस्तेषु के
सर्वाङ्गेषु तथा न्यसेदिदमधोर्ध्ववर्णैर्मनूत्थैः क्रमात् ॥ ५४ ॥
अच्छाच्छकामरणमाल्यविलेपनाढ्यः
पाशाङ्कुशाभयवरोद्यतदोःसरोजः ।
स्वच्छारविन्दवसतिः सुसितः प्रसन्नो
भूयाद्विभूतिविधये वरुणश्चिरं वः ॥ ५५ ॥
अङ्गैरष्टभिरङ्घ्रिभिर्दिगधिपैः समभिपूज्य वारीशम् ।
कलशजलैः पुनरभिषिञ्चेत् परमगुरुर्मन्त्रजापिनं शिष्यम् ॥ ५६ ॥
वसुभिः प्रसाद्य देशिकमथ शिष्यो मनुमिमं जपेल्लक्षम् ।
जुहुयाच्च दुग्धपक्वैरन्नैरयुतं घृताप्लुतैर्मतिमान् ॥ ५७ ॥
ऋणियमृणमोचनी स्यात्जपैर्हुतैस्तर्पणैश्च मन्त्रविदः ।
संग्रामदुर्गतेरपि सद्यो हृद्याच्च सर्वदैन्नक्षौम् ॥ ५८ ॥

दूर्वाः सितस्य शकलैर्घृतसिक्तैर्यचतुर्दिनं जुहुयात् ।
सकलोपद्रवशान्त्यै तथर्णमुक्त्यै च सम्पदे सुचिरम् ॥ ५८ ॥
वेतससमिदयुतहुताद्वृष्टिमकालेऽपि वितनुते वरुणः ।
गव्यक्षीरसमेताचिदिनकृताद्दिनमुखेषु मुदितमनाः ॥ ६० ॥
शतभिषजि समुदितेऽर्के चतुःशतं पायसं हुनेत् सघृतम् ।
ऋणमोचनाय लक्ष्मी जनसंवननाय (१) शुक्रवारे च ॥ ६१ ॥
पाशनिबद्धं वैरिणमङ्कुशसंप्रोतमम्बुधेः पारे ।
ध्यायन् परे चिपन्तं वरुणं जुहुयाच्च तथा प्रजपेत् ॥ ६२ ॥
पाशनिबद्धं वैरिणमसिनाच्छिद्याशु नाशयन्तममुम् ।
ध्यायन् वेतससमिधो गोमूत्रयुता हुनेत्तदपहत्यै ॥ ६३ ॥
दोग्ध्रावैर्भृगुवारे घृतसंसिक्तैः कृतश्च हवनविधिः ।
ऋणमोचदश्च विविधोपद्रवशमनकृद्रमाकरः प्रोक्तः ॥ ६४ ॥
पश्चिमसन्ध्यासमये पश्चिमवदनोऽनलं समाराध्य (२) ।
ऋचमेनामभिजप्याचतुःशतं सकलदुःखशमनाय ॥ ६५ ॥
शालीर्घृतसंसिक्ताः सरिदन्तरितो जुहोतु परसेनाम् ।
संस्तम्भयितुं त्रिदिनं सुमना मन्त्री चतुःशताहुत्या ॥ ६६ ॥
प्रत्यङ्मुखोऽथ मन्त्री प्रतर्पयेद्वा जलैः सुशुद्धतरैः ।
यः स ह्युपद्रवाणां रुन्ध्याञ्चिचयं श्रियं समृच्छति च ॥ ६७ ॥
बहुना किमनेन सन्निमुख्यो मनुनाशु प्रसाधयेदभीष्टम् ।
हवनक्रिययाऽथ तर्पणैर्वा संजपैः पाशभृतो महामहिम्नः ॥ ६८ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे एकत्रिंशः पटलः ॥ * ॥

---

(१) "वरनाय" इति पाठान्तरम् । (२) "समाभाय" इति वा पाठः ।

# द्वात्रिंशः पटलः ।



अथ यन्त्रविरचनाभिर्मन्त्रविशेषान् बहुप्रकारयुतान् ।
कथयिष्ये मन्त्रविदामैहिकपारत्रिकार्थये सुधियाम् ॥ १ ॥
त्रिगुणितसंज्ञे मायालङ्कृतकोणे तयाभिसंवीते च ।
या या विशेषक्रृप्तिस्तां तामपि संग्रहेण समभिदधे ॥ २ ॥
कोणोल्लसितसुधाचरगलदमृतस्फुरितवह्निपरिवीताम् ।
बिन्दोर्मध्यगतबीजस्थितां सुधाधारया परिस्रुतया ॥ ३ ॥
पूर्णसुषुम्नारन्ध्रां साध्यतनुं संस्मरञ्छिरसि बध्यात् ।
तेनारोगी पुरुषः प्रज्ञावान् दीर्घमायुराप्नोति ॥ ४ ॥
शीतांशुमण्डलस्थं कूर्मचतुर्थात्तकोणलसितमिदम् ।
शीतप्रलिप्तजप्तं कष्ठतं च शिरोरुजार्त्तिहरम् ॥ ५ ॥
तद्यन्त्रयुग्मं विलिखेदभिलपितसाध्यसाधकाख्ययुतम् ।
साध्यमधस्तात् कृत्वा बद्धाच स्वपितु साधको नित्यम् ॥ ६ ॥
विधिनानेन तु सद्यः साध्योऽस्य वशे भवेदयत्नेन ।
तत्तु खनित्वागारे तत्रान्नं सिद्धमत्तु (१) वश्यकरम् ॥ ७ ॥
साध्याख्यां शक्तिवह्नी नरहरिमपि रन्ध्रत्रये च त्रिशक्ती
कर्मालिख्याथ लोष्टे सततगमपि संस्थाप्य जप्त्वा स्वशक्त्या ।
आगारे स्थापयित्वा नरमुदकनिधेश्चिन्नपात्रे लिखित्वा
दीप्ताग्नौ तापयित्वा स्त्रियममलधियः सम्यगाकर्षयेयुः ॥ ८ ॥
त्रिगुणितविहिता विधयः षड्गुणिते च प्रयोजनीयाः स्युः ।
रक्षाकर्मणि विहितं तत्रायः प्रचुरमन्त्रयुक्ततया ॥ ९ ॥

---

(१) "सिद्धमाज" इति पाठान्तरम् ।

पाशाष्टाचरवीतशक्तिदहनप्रोल्लासि साध्याह्वयं
शक्तिश्रीस्मरसंहतं क्रुयुगरम्भ्रावद्धचिन्तामणि ।
इत्थं षड्गुणितं विलिख्य जपितं मन्त्री दधानोऽसक्त-
द्राज्ञां वामदृशां प्रियो भवति संग्रामे पुरे वा चिरम् ॥ १० ॥
चिन्तारत्नाश्रितास्त्रित्रियुगमथ नृसिंहाहतान्तःस्ववीजं
प्राद्ः साध्याभिधानं वहिरपि लिपिभिः प्रानुलोमाभिवीतम् ।
क्ष्माविम्बद्वन्द्वरम्भ्रप्रचितचतुरर्णं ग्रहोन्मादभूत-
व्याधिघ्नं यन्त्रमस्मिन् क्षतकलशविधिर्गर्भरचादिकारी (१) ॥ ११ ॥
द्वादशगुणितेऽखिलमनुसिंहवीजं महेन्द्रपुरवीतम् ।
शीतालिप्तं पुरलघुधूपितमन्तःप्रवद्धकर्म्मयुतम् ॥ १२ ॥
चतस्रपु दिक्षु निखन्यात् सीमाद्वारतोरणाधो वा ।
देशाभिगुप्तिरेषा शुभतमा सूरिभिः पुरा प्रोक्ता ॥ १३ ॥
अलदलनिशाक्रुशीतैर्मसृणोपदे (२) विलिख्य यन्त्रमिदम् ।
सेरस्थापनकर्म्म प्रतिजप्तं प्राङ्गणे खनेन्मन्त्री ॥ १४ ॥
तत्र विशन्ति न चौरा ग्रहक्ष्मत्याः स्वान्निकेतरचा च ।
अश्माभिपातवारणमभिवृद्धिः सम्पदाम्भवेदचिरात् ॥ १५ ॥
तद्वद्घटार्गलाख्यं यन्त्रं नीले विलिख्य पट्टवरे ।
मोचकसाध्यप्रतिकृतिहृदये गुलिकां विधाय निःक्षिप्य ॥ १६ ॥
विमधुरयुक्ते पात्रे विन्यस्याभ्यर्च्य गन्धपुष्पाद्यैः ।
वलिमपि विकिरेद्रात्रिषु समाह्वादानयेद्वधूमिष्टाम् ॥ १७ ॥
तामेवाथ प्रतिकृतिमग्नौ किञ्चित् प्रतापयन् जप्यात् ।
शक्तिं पाशाङ्कुशमनुसाध्याह्वविदर्भितां समाहितधीः ॥ १८ ॥

---

(१) "गर्भरचाधिकारी" इति पाठान्तरम् ।
(२) "मसृणे पट्टे" "मसृणे पदे" वा इति पाठान्तरम् ।

विधिनामुना चिरात्तामह्लितधियमपि सुराङ्गनां मन्त्री ।
आकर्षयेन्निजवाञ्छाप्रदायिनीं मदनबाणविह्वलिताम् ॥ १९ ॥
यन्त्रं तदेव लाक्षातास्रावीतं निधाय कलशजले ।
जप्वा भानुसहस्रकमभिषिञ्चेद्रजतकाञ्चनाभ्यां च ॥ २० ॥
तद्वद्विधाय कलशं तद्यन्त्रं धारयेत् पुनर्नित्यम् ।
वाञ्छितसिद्धिं लभते भक्त्या प्रणमन्ति देवता अपि तम् ॥ २१ ॥
यन्त्रं तदेव मन्दिरभित्तावभिलिख्य पूजयेद्दिनशः ।
चौरादिभूतनागा अपि तं देशं न वीक्षितुं शक्ताः ॥ २२ ॥
आलिख्य वीरपट्टे यन्त्रमिदं समस्तकार्पितं कृत्वा ।
युध्यन् प्रत्यर्थिनमपि हत्वा यात्यव्रणाङ्कितो योद्धा ॥ २३ ॥
गजमदविलिखितमेतद्यन्त्रं जप्त्वा मस्तके न्यस्तम् ।
करिणीमपि मदयेत् द्राक् चण्डतरे का कथा करेणुवरे ॥ २४ ॥
बहुनेति भाषितेन किमेभ्यो मुख्यं न किमपि च यन्त्रेभ्यः ।
तस्मादमूनि सद्भिर्धार्याणि च विश्ववश्यमिच्छद्भिः ॥ २५ ॥
गजमृगमदकाश्मीरैर्मन्वितमः सुरभिरोचनायुक्तैः ।
विलिखेदलक्तकरसालुलितैर्यन्त्राणि सकलकार्य्यार्थी ॥ २६ ॥
राज्या पटुसंयुतया सपाशगत्यङ्कुशेन मन्त्रेण ।
स्नादक्षयाभिजुह्वन् निशुर्व्वीशांस्तयोर्व्वशी वशयेत् ॥ २७ ॥
हृल्लेखाग्निस्थसाध्याह्वयमथ बहिरां क्रीं हृतं वह्निगेह-
द्वन्द्वास्रिस्वस्तिकाद्यं प्रतिलिखतु दले यन्त्रकं नागवल्ल्याः ।
जप्त्वा शक्तिं तु पाशाङ्कुशलिपिविधृतां तापयेद्दीपवह्नौ
सद्यं भक्त्या नताङ्गी स्मरशरविवशा प्रेमलीलाभियाति ॥ २८ ॥
शक्तिस्थं निजनाम वह्निभवनद्वन्द्वोदरे साम्बरं
मौर्जे साध्यविदर्भया परिवृतं शक्त्या बहिः पार्थिवम् ।
तत्कोणे स्मरमन्त्रपुटनयनमोर्त्यैः पुनः कण्टकै-
स्ताम्रूने निखिताभिजप्तमदयेद्योषिन्मनोमोहनः ॥ २९ ॥

शक्त्यन्तःस्थितसाध्यनाम परितो बीजैश्चतुर्भिः समा-
वृतं शक्तिमनोभवाङ्कुशलिपिप्रोभिः समावेष्टितम् ।
शाल्युत्थे प्रतिलिख्य पिष्टविकृते प्राणान् प्रतिष्ठाप्य च,
निम्बादौ परिभर्ज्य तत्समदतः साध्यो वशे तिष्ठति ॥ ३० ॥

मान्तं शिखीन्दुयुतं दहनांशसाध्यं मायांशसाधकमथाभिहतं कलाभिः ।
साध्योऽस्तदिङ्मुखशूलमिदन्तु भर्त्सुर्यस्मादयं नरलताङ्घ्रिवशीकरं स्यात् ॥ ३१ ॥

मृत्काराङ्गुलिकात्तया सकलकमाधान्तर्व्वधायुक्तया
साध्यस्याङ्घ्रिरजोयुजा मृदुमृदा कृत्स्नस्य शक्तिं हृदि ।
रूपस्याभिविलिख्य तद्विवरके साध्यस्तदीरान् प्रति-
ष्ठाप्याजप्य निखन्य तत्र दिनशो मेहेच्चिरं वश्यकृत् ॥ ३२ ॥

वामाक्ष्याः प्रतिलिख्य नाम निशया वामोरुदेशे निशा-
मध्ये वामकरेण संगतमतिः संछादयंस्तन्मनाः ।
पूर्व्वं रुद्रपदं ततश्च दयिते योगीश्वरि त्विन्दुम-
न्त्वं जप्यति चेदनङ्गविवशां सद्यः प्रियामानयेत् ॥ ३३ ॥

मायाङ्कदोरथान्ते ब्रह्मश्रीराजितेऽचरान् प्रोक्ता ।
राजयुतपूजितेऽर्णान् जये चविजये सगौरि गान्धारि ॥ ३४ ॥
त्रिभुवनवशङ्करीति च सर्व्वलोकान्तिके वशङ्करि च ।
सर्व्वस्त्रीपुरुषवशङ्करि सुदुघे वागचरान् प्रवीप्सर ततः ॥ ३५ ॥
मायाद्विठान्तिको मनुरेकाधिकषष्टिवर्णकः प्रोक्तः ।
ऋषिरस्याजो निवृच्छन्दो गौरी च देवता प्रोक्ता ॥ ३६ ॥
सचतुर्दशभिर्दशभिस्तथाष्टभिश्चाष्टभिस्तथा दशभिः ।
एकादशभिर्मन्त्राचरैः क्रमादुच्यते षडङ्गविधिः ॥ ३७ ॥

असकलशशिराजन्मौलिराबद्धपाशा-
ङ्कुशरुचिरकराब्जा बन्धुजीवारुणाङ्गी ।
अमरनिकरवन्द्या त्रीचणा शोणलेपां-
शुककुसुमयुता स्यात् सम्पदे पार्व्वती वः ॥ ३८ ॥

अयुतं प्रजपेज्जुहुयाद्धृतप्लुतैः पायसैर्दशांशेन ।
आराधयेत्तदङ्गैर्मातृभिराशाधिपैर्निशातमनाः ॥ ३९ ॥
तिलतण्डुलकैर्लोणैस्त्रिमधुरसिक्तैः फलैश्च मधुरतरैः ।
आज्यैररुणकुवलयैस्त्रिदिनं हवनक्रियाशु वश्यकरी ॥ ४० ॥
नित्यश्चादित्यगतां देवीं प्रविचिन्त्य तन्मुखो जप्यात् ।
अष्टोत्तरशतमङ्गामादौ भुवनं वशीकरोत्यचिरात् ॥ ४१ ॥
वर्णादर्व्वाङ्मन्त्री प्रयोजयेत् साध्यनाम कर्म्मयुतम् ।
प्रजपेद्दा हवनविधौ वाञ्छितसिद्धिप्रदस्तथा मन्त्रः ॥ ४२ ॥
सतारराजमुख्यन्ते राज्ञाभिमुखिवर्णकान् ।
आभाष्य वश्यमुखि च क्लीं श्रीं मारार्णकान् वदेत् ॥ ४३ ॥
वीप्सा देवि महादेवि पद देवाधिदेवि च ।
प्रोक्ता सर्व्वजनस्येति मुखं मम वशं वदेत् ॥ ४४ ॥
कुरु कुर्व्विति ठद्वन्द्वान्तिकं मन्त्रं समुद्धरेत् ।
सप्ताधिकैः सदशभिस्तथा विंशद्भिरक्षरैः ॥ ४५ ॥
दशभिः सप्तभिश्चैव चतुर्भिः करणाक्षरैः ।
पञ्चभिः सप्तदशभिर्व्वर्णैरङ्गक्रिया मनोः ॥ ४६ ॥
ब्रह्म ऋषिमन्त्रं संप्रोक्ता (१) प्रतिपत्तिरमुष्य च ।
मन्त्रस्य जपकृत्सिद्ध तथा होमविधिः स्मृतः ॥ ४७ ॥
मन्त्री सर्व्वजनस्थाने कुर्य्यात् साध्याह्वयं मनोः ।
प्रजपे हवने वाथ तथा तर्पणकर्म्मणि ॥ ४८ ॥
देवीधाष्टशतं प्रसूनवदय विम्बादुयुक्तं हुनेत्
सप्ताहं भसितेन तेन विहितं पुण्ड्रादिकं वश्यकृत् ।
चाज्यैस्तत्कृतहोमपातितसमाजसं घृतं प्राशयेत्
साध्यं निष्परिहारकञ्च तदिदं वश्यप्रदं देहिनाम् ॥ ४९ ॥

---

(१) "ब्रह्मर्षिमन्त्रसंप्रोक्ता" इति पाठान्तरम् ।

शक्तिं साध्यर्क्षहृच्चप्रतिकृतिहृदि संलिख्य संस्थाप्य जीवं
जप्त्वा खन्याङ्गनेऽग्निन्विधिवदनलमाधाय पुष्पैर्जवायाः ।
देवीमन्त्रेण रात्रौ दशपरशतसंख्यैस्तु काचन्दनाक्तै-
र्हुत्वा तां खमरात्रं सरिति निखननादुत्तमं वश्यकर्म ॥ ५० ॥
अन्नं मह्यन्नं मे देह्यन्नाधिपतये ममेत्युक्त्वा ।
अन्नं प्रदापयेति च ठद्वयान्तोऽन्नप्रदायको मन्त्रः ॥ ५१ ॥
करणेन्द्रियरसधातुद्वयवर्णैरङ्गमस्य मन्त्रपदैः ।
द्वयुतजपावधिरेष द्विसहस्रहुतश्च सर्पिरन्नाभ्याम् ॥ ५२ ॥
दुग्धाब्धौ रूप्यवप्राहृतकनकमयद्वीपवर्य्ये सुराढ्ये
कल्पद्रूद्यानकाधो मणिमयलसिते वित्तपस्याग्रभागे ।
आसीने भूम्यियौ वाञ्छितवसुनिचयं मन्त्रिणां संसृजन्त्यौ
मन्त्री संचिन्तयानो जपतु दिनमुखे सम्पदेऽन्नस्य मन्त्रम् ॥ ५३ ॥
नत्यादिभगवत्यन्ते माहेश्वरिपदं वदेत् ।
अन्नपूर्णेऽग्निजायान्तो मन्त्रोऽन्नप्रदसंज्ञकः ॥ ५४ ॥
मायाविहितपडङ्गो दिनमुखे जप्यश्च षोड़शसहस्रम् ।
प्रोक्तो जपावसाने सहृतैरन्नैर्दशांशको होमः ॥ ५५ ॥
रुद्रताण्डवविलोकनलोलां भद्रवक्त्रनयनां (१) भवकान्ताम् ।
अन्नदाननिरतां जननीं तां संस्मरन् जपतु चित्रदुकूलाम् ॥ ५६ ॥
वैश्रवणः पक्षाशः पिङ्गलविविधौ तथैव वित्तेशः ।
सकुवेरः स्वाहान्ताः सव्याहृतयः समीरिता मन्त्राः ॥ ५७ ॥
वित्तेशस्यान्तराले दशशटसमिधः सर्पिषाक्ता विविक्ता
होतव्या द्रव्यसिद्धै कनकघटकरण्डासदीप्तमुन्दिमोऽसौ ।
हेमाभो रत्नदीप्तोदरकमननिधिश्चोभितो रत्नपीठे (२)
ध्येयो न्यग्रोधमूले हुतभुजि विदुषा वैश्रदेवावमाने ॥ ५८ ॥

(१) "भद्रपत्रनयनाम्" इति पाठान्तरम् ।
(२) "हेमपीठे" इति पाठान्तरम् ।

अयुत प्रजपेज्जुहुयाद्घृतप्लुते पायसैर्दशांशेन ।
आराधयेत्तदङ्गैर्मालभिराशाधिपैर्निशातमना ॥ ३९ ॥
तिलतण्डुलकैर्लोणैस्त्रिमधुरसिक्तैः फलैश्च मधुरतरैः ।
आज्यैररुणकुवलयैस्त्रिदिन हवनक्रियाश्च वश्यकरी ॥ ४० ॥
नित्यञ्चादित्यगता देवीं प्रविचिन्त्य तन्मुखो जप्यात् ।
अष्टोत्तरशतमम्भामादौ भुवन वशीकरोत्यचिरात् ॥ ४१ ॥
वर्णादर्व्वाङ्मन्त्री प्रयोजयेत् साध्यनाम कर्म्मयुतम् ।
प्रजपेद्वा हवनविधौ वाञ्छितसिद्धिप्रदस्तथा मन्त्र ॥ ४२ ॥
सताररराजमुख्यन्ते राजाभिमुखिवर्णकान् ।
आभाष्य वश्यमुखि च क्लीं श्रीं मारार्णकान् वदेत् ॥ ४३ ॥
वीप्सा देवि महादेवि पद देवाधिदेवि च ।
प्रोक्ता सर्व्वजनस्येति मुख मम वश वदेत् ॥ ४४ ॥
कुरु कुर्व्विति ठद्वन्द्वान्तिक मन्त्र समुद्धरेत् ।
सप्ताधिकैः सदशभिस्तथा विशद्भिरक्षरैः ॥ ४५ ॥
दशभि सप्तभिश्चैव चतुर्भि करणाक्षरैः ।
पञ्चभि सप्तदशभिर्व्वर्णैरङ्गक्रिया मनो ॥ ४६ ॥
ऋष्य श्रीमन्त्र समोक्षा (१) प्रतिपत्तिरमुष्य च ।
मन्त्रस्य जपकॢप्तिश्च तथा होमविधि स्मृत ॥ ४७ ॥
मन्त्रो सर्व्वजनस्थाने कुर्य्यात् साध्याह्वय मनो ।
प्रजपे हवने वाथ तथा तर्पणकर्म्मणि ॥ ४८ ॥
देवीभाष्टशत प्रसूनवदय बिम्बादुयुक्त हुनेत्
सप्ताह भसितेन तेन विहित पुण्ड्रादिक वश्यकृत् ।
पाज्यैस्ताकृतहोमपातितममाजम घृतं प्राशयेत्
साध्य निष्परिहारकश्च तदिद वश्यमथैदेहिनाम् ॥ ४९ ॥

---

(१ "ऋष्यश्रीमन्त्रसमोक्षा" इति पाठान्तरम् ।

शक्तिं साध्यर्चहृच्चप्रतिकृतिहृदि संलिख्य संस्थाप्य जीवं
जप्त्वा खन्याङ्गनेष्विन्विधिवदनलमाधाय पुष्पैर्जवायाः।
देवीमन्त्रेण रात्रौ दशपरशतसंख्यैस्तु काचन्दनाक्तै-
र्हुत्वा तां सशरावं सरिति निखननादुत्तमं वश्यकर्म ॥ ५० ॥
अन्नं मह्यन्नं मे देह्यन्नाधिपतये ममेत्युक्त्वा।
अन्नं प्रदापयेति च ठद्वयान्तोऽन्नप्रदायको मन्त्रः ॥ ५१ ॥
करणेन्द्रियरसधातुद्वयवर्णैरङ्गमस्य मन्त्रपदैः।
द्वायुतजपावधिरेष द्विसहस्रहुतश्च सर्पिरन्नाभ्याम् ॥ ५२ ॥
दुग्धाब्धौ रूप्यवप्रावृतकनकमयद्वीपवर्य्ये सुराद्ये
कल्पद्रूद्यानकाधो मणिमयलसिते वित्तपस्याग्रभागे।
प्राचीने भूत्रियौ वाञ्छितवसुनिचयं मन्त्रिणां संसृजन्त्यौ
मन्त्री सचिन्तयानो जपतु दिनमुखे सम्मदेऽन्नस्य मन्त्रम् ॥ ५३ ॥
नत्यादिभगवत्यन्ते माहेश्वरिपदं वदेत्।
अन्नपूर्णेऽग्निजायान्तो मन्त्रोऽन्नप्रदसंज्ञकः ॥ ५४ ॥
मायाविहितषडङ्गो दिनमुखे जप्यश्च षोड़शसहस्रम्।
प्रोक्तो जपावसाने सहृतैरंशैर्दशांशको होमः ॥ ५५ ॥
रुद्रताण्डवविलोकनलोलां भद्रवक्त्रनयनां (१) भवकान्ताम्।
अन्नदाननिरतां जननीं तां संस्मरन् जपतु चित्रदुकूलाम् ॥ ५६ ॥
वैश्रवणः षडर्णः पिङ्गलविविधौ तथैव वित्तेशः।
सकुबेरः स्वाहान्ताः सप्ताङ्गतयः समीरिता मन्त्राः ॥ ५७ ॥
विभेशस्यान्तराले दशवटतलेषधः सविपाक्षा विविक्ता
श्रोतव्या द्रव्यमिहैव कनकघटकरण्डाक्षदोसुन्दिलोऽसौ।
हेमाभो रत्नदीप्तोदरकमलनिधिद्योतितो रत्नपीठे (२)
ध्येयो न्यग्रोधमूले हुतभुजि विदुषा वैश्रदेवावमाने ॥ ५८ ॥

(१) "भद्रवक्त्रनलिनाम्" इति पाठान्तरम्।
(२) "हेमपीठे" इति पाठान्तरम्।

मन्त्रैरेतैर्घृतयुतपायसहोमोऽपि मन्त्रिणां विहितः ।
लक्ष्मी सप्ततैश्च तिलैर्बिल्वसमिद्धोमतस्तथैव फलम् ॥ ५९ ॥

भया तोयेन्दुयुक् सैव विबिन्दुर्हंसताश्वरैः ।
वालिस्ययोनिर्नत्यन्तो वसुवर्णो मनुर्मतः ॥ ६० ॥

वसुसाहस्रजाप्य तावच्छतहुतो मतः ।
होमः सर्पिषताम्रेन बीजेनाङ्गक्रिया मता ॥ ६१ ॥

रत्नस्वर्णांशुकादीन्निजकरकमलाद्दक्षिणादाकिरन्तं
वासोराशौ निधायापरममरगुरुं पीतवस्त्रादिभूषम् ।
ध्यायन्नासीनमप्यापणभुवि शतसंख्यं सविंशत्कमेवं
पीतापुष्पैर्घृताक्तैस्त्रिदिनमथ हुनेत् स्वर्णवस्त्रादिसिद्धैर ॥ ६२ ॥

वययोरन्तरास्त्रं मे देहि शुक्राचरा द्विठः ।
मन्त्रोऽयुतजपः सर्पिःसहस्रहवनक्रियः ॥ ६३ ॥

शुक्रास्ये शुक्लपुष्पैर्हुतभुजि गुणशः सप्तशोऽप्येकविंश-
द्वारं होतव्यमेषोऽप्यतिसितकुसुमालेपनो वामदोष्णा ।
वासोरत्नानि कार्त्तस्वरमपि सततं साधकाय प्रयच्छन्
ध्यातो व्याख्यानमुद्राकलितवरकरस्त्वापणालिन्दसंस्थः ॥ ६४ ॥

वान्तरस्थोऽक्षिपो दण्डी वेदान्ते सौरिदाहकः ।
सायान्ते नतिरप्यष्टवर्णो वैयासिकोमनुः ॥ ६५ ॥

मुनिव्रातावीतं विमलधियमम्भोदरुचिर-
द्युतिं व्याख्यामुद्राकलनविलसद्दक्षिणकरम् ।
परं जानौ कृत्वा दृढकलितकक्षैकविवरं
समासीनं व्यासं स्मरत निरतं पुण्यचरितम् (१) ॥ ६६ ॥

प्रकृतिसहस्रजपोऽयं दशांशकृतपायसाज्यहवनविधिः ।
निरुपमकविताप्रज्ञाव्याख्याश्रीसम्पदावहो मन्त्रः ॥ ६७ ॥

---

(१) "इन्दनिचयम्" इति पाठान्तरम्।

करचरणमूलपार्श्वद्युनीहरेर्बिन्दुदुंसरसनार्णैः ।
अलिकाद्यो वर्गास्तद्विठान्तिको मनुरयं ध्रुवादिः स्यात् ॥ ६८ ॥
अयुतं प्रजपेच्च षट्सहस्राधिकमन्ते जुहुयाद्दशांशमानैः ।
तिलसर्षपतण्डुलैः सशालीहविराज्यैः सुसमेधिते कृशानौ ॥ ६९ ॥
उत्तुङ्गाद्रिः प्रचेता अपि दहनसमीरौ धराव्योमसंज्ञे
प्राक्प्रत्यग्दक्षसौम्यास्वध उपरि च दिक्षु प्रवद्धप्रभाः स्युः ।
तन्मध्यस्थान्विपक्षादिकहरिरदन्तीन्द्रनागान् सचोरान्
हन्त्येतैर्मन्त्रिमुख्यो मनुविहितबलव्याकुलान् (१) सद्य एव ॥ ७० ॥

निजरिपुमचलाद्यैस्तैः ससम्बाधवीतं
मनुविदथ हलीभ्यां रुद्धनिश्वासवेगम् ।
तदुपरिगतवीजैः साधुसंस्यूतवक्त्रं
दहतु सकवचास्त्रैर्दोर्दण्डिभिः स्वेच्छयैव ॥ ७१ ॥

योनिर्वियत् सनेत्रं परमे वर्णास्तथाग्निगं गेदः ।
रक्तस्वक् (२) द्विठान्तस्ताराद्योऽयं मनुर्दशार्णयुतः ॥ ७२ ॥
अयुतं जपेन्मनुमिमं सहस्रयारं हुनेत्तयाज्येन ।
ध्यातापि गिरिसुतेयं जगतीं विश्वां वशीकरोत्यनिशम् ॥ ७३ ॥
पद्मारूढा कराग्रे नवकमकमयीं वेत्रयष्टिं दधाना
दक्षेऽन्येनानयन्ती स्फुरिततनुलता पाशबद्धां स्वसाध्याम् ।
देवी नित्यं प्रसन्ना नवशशधरबिम्बा त्रिनेत्राभिरामा
दद्यादाद्याऽनवद्यां प्रवरफलसुखप्राप्तिहृद्यां श्रियं वः ॥ ७४ ॥
विधयानुदिनहृद्ययाऽनया होमकर्म वरहेमदायि तत् ।
कामिता सपदि वामलोचनामानयेदपि च मारपीडिताम् ॥ ७५ ॥
हवनक्रिया सपदि यन्त्रकरी मधुराज्ययैकपटुना पटुना ।
सदृशो न कश्चन जगत्यपरो मनुनामुनाभयमकर्मविधौ ॥ ७६ ॥

---

(१) "मनुर्विहितबलव्याकुलान्" इति पाठान्तरम् ।
(२) "रक्तस्वक्" इति पाठान्तरम् ।

# त्रयस्त्रिंशः पटलः ।

---

अथ सन्तानसंसिद्धिसमाकुलितचेतसाम् ।
तदुत्पत्तिकरं योगं प्रवक्ष्ये गृहमेधिनाम् ॥ १ ॥
नचापुत्रस्य लोकोऽस्ति पितरोऽधः पतन्ति च ।
तस्मात्तु सकलोपायैर्यतेतापत्यसिद्धये ॥ २ ॥
देवर्षिपितृपूजासु विरतानामभक्तितः ।
गुरुमातृपितृश्राद्धवञ्चकानाञ्च नित्यशः ॥ ३ ॥
अर्थिभ्योऽर्थमदातॄणां (१) विद्यमानेऽर्थसञ्चये ।
अदत्त्वैवातिथिभ्योऽन्नं भोक्तॄणां पापचेतसाम् ॥ ४ ॥
हरिशङ्करयोः पादपद्मार्चारहितात्मनाम् ।
स्वभार्य्यानिन्दकानाञ्च लोकवेदविरोधिनाम् ॥ ५ ॥
इत्यादिदोषदुष्टानां पापानां गृहमेधिनाम् ।
दुष्प्रतिग्रहदोषाद्वा जायते त्वनपत्यता ॥ ६ ॥
एवमादिकदोषापनोदिनी सुतसिद्धिदा ।
अशेषपापहन्त्री च वक्ष्यते यजनक्रिया ॥ ७ ॥
पुत्राप्तये गृहस्थो दीक्षाविधिना चतुर्दशीरात्रिम् ।
सह पत्न्या गमयित्वा कृत्वा पौर्व्वाह्णिकीः क्रियाः सकलाः ॥ ८ ॥

संयोज्य किञ्चन यथाविधि पञ्चगव्यं
संकोचकेन मनुना प्रतिमन्त्य वार्णम् ।
संमन्त्य चाष्टशतकं समवद्यभूत-
मन्त्रैः पिबेत् स्वयममावपि गर्भधात्री ॥ ९ ॥

---

(१) "अर्थिभ्योऽप्यवरातॄणाम्" इति पाठान्तरम् ।

वाणी स्यात्ताररूपा शिरसि गिरिसुता शक्तिरूपा ललाटे
रव्यग्न्यक्ष्णोस्तथात्मा (१) विधुरपि वदनावेष्टने टान्तरूपः (२)।
श्रीर्जिह्वायां स्वरूपाऽप्यभिमतकरिरूपौ स्वहौ दीर्घयुक्ता-
वेवं न्यासो मुखे श्रीविभवसुखयशःकान्तिमेधाकरः स्यात् ॥ ७७ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे द्वात्रिंशः पटलः ॥ * ॥

---

(१) "तथाक्षम्" इत्यपि पाठो दृश्यते।
(२) "ठान्तरूप." इति पाठान्तरम्।

वर्गादिको हलोमन्तः सङ्कोचाख्यो भुवादिकः।
मन्त्रः स्याद्भूतमनवः स्युश्च भूतात्मनामभिः॥ २१॥
अतो हिताय जगतां प्रथितं श्रितचेतसाम्।
अथ संक्षिप्य वक्ष्यामि लक्षणं गुरुशिष्ययोः॥ २२॥
स्वच्छः स्वच्छन्दचरितोऽतुच्छधीस्त्यक्तहृच्छयः।
देशकालादिविद्देशे देशे देशिक उच्यते॥ २३॥
अग्रगण्यः समग्रज्ञो निग्रहानुग्रहे क्षमः।
षड्वर्गविजयव्यग्रोऽनुग्रो विशदविग्रहः॥ २४॥
शुक्लः शुक्लांशुकोऽक्लिष्टकर्मा विक्लयमानसः।
वेदवेदाङ्गविद्यादिवेदिता विदितागमः॥ २५॥
इष्टदोऽनिष्टसंहर्त्ता दृष्टादृष्टसुखावहः।
रतोऽविरतमर्चासु परं पुरसुरद्विषोः॥ २६॥
दाता दान्तः शान्तमना नितान्तं कान्तविग्रहः।
स्वदुःखकारणेनापि परं परसुखोद्यतः॥ २७॥
ऊहापोहविदध्यात्मव्याकुलो मोहवर्जितः (१)।
भक्तानुकम्पी विज्ञातज्ञानो ज्ञातपरेङ्गितः॥ २८॥
निरंशः सांशवित् सर्व्वसंशयच्छिदसंशयः।
नयविद्विनयोपेतो विनीतनीतिरात्मवान्॥ २९॥
व्याधिरप्रापितव्याधिः समाधिविधिसंयुतः।
स्तुतिशूरोऽतिधीरश्च वीरो वाक्यविशारदः॥ ३०॥
वर्गोपितसमारम्भो गभीरो दम्भवर्जितः।
आदर्श इव विद्यानां न तु दर्शनदूषकः॥ ३१॥
शमो मृण्मय इव ... मैत्र्याभीष्टमित्रता (२)।
शिष्यतादात्म्यसंसृष्टेन द्रविणेन च॥ ३२॥

(१) "ऊहापोहादिविदितात्मा मोहमोहविवर्जित" इति पाठान्तरम्।
(२) "दमो मन्यव ... अभीष्टमित्रता" इति पाठान्तरम्।

ततोऽग्निमाधाय चरुञ्च कृत्वा सङ्कल्प्य तद्दक्षिणमुत्तरञ्च ।
भागक्रमात् पैतृकदैविक तयोर्ल्वे तु पूर्व्वं जुहुयात क्रमेण ॥ १० ॥
स्मृत्वा निज पितरमम्यधरा निपस्य सान्नाय्यपिण्डयुगल घृतसप्लुत तत् ।
हुत्वा ध्रुवेण घृतस पुटित तथैव मन्त्री पितामहमथ प्रपितामहञ्च ॥११॥
व्याहृतिभिरथ पञ्चहोमत सर्व्वेण प्रतिजुहोतु सर्पिषा ।
मातृवर्गगुरुतपितृद्वय पूर्व्ववत्समवदाय साधक ॥ १२ ॥
कलायुते षोडशमूर्त्तिमन्त्रैर्व्यस्तैरथाष्टाक्षरजैश्च वर्णैः ।
अष्टौ समस्तेन च तेन पञ्चाक्षरेण चाष्टाक्षरवज्जुहोतु ॥ १३ ॥
पञ्चाहुतीनामिति वर्णसख्य चतुर्गुण चापि घृताहुतीनाम् ।
हुत्वावदानद्वितयञ्च पुंस्त्रीभेदप्रभिन्न हविषा करोतु ॥ १४ ॥

पञ्चाक्षरेण पुरुषात्मकमन्यदष्ट
वर्णेन चाष्टशतयुग्ममथ प्रजप्य ।
सयोज्य तद्युगलमप्यभिजप्य विष्णु
र्योन्यादिकेन मनुना च कपर्द्दिसख्यम ॥ १५ ॥

पुरुष पुरुषात्मक प्रकृत्यात्मकमन्याय समाहितोपयुज्य ।
अवदानयुग क्रमान्मनस्वी पुनराचम्य समर्च्चयेद्धुताशम ॥ १६ ॥
गुरवेऽप्यथ दक्षिणा प्रदत्त्वाऽन्नमुदारञ्च भोजयेद्द्विजातीन् ।
प्रतिपर्व्वकमेवमेकहद्दहा मतिमान् वत्सरक प्रपूरयीत ॥ १७ ॥
एकश्चासादन्यमब्द द्विजातीन् सभोज्यात्र पूरयेदेकहद्दहा ।
सपूर्य्यमाणदेवमेव विकाम्दादर्व्वाक् पुत्री जायते देवगन्ता ॥ १८ ॥
पितृदेवताप्रसादान्मेधायु कान्तिस युतो विद्वान् ।
सम्प्रीतिश्रीयुक्तो धर्म्मरुचिर्भवति सन्तते कर्त्ता ॥ १९ ॥

समुनिसुरपितृभ्या ब्रह्मचर्य्येण यज्ञै
स्त्रिविधमृणमपत्यैरेव समाचयेद्य ।
श्रुतिवचनकृदग्निस्त्वापि लोके परस्मि
न्निति मत् स्वरसमी पुज्यत साधुनाके ॥ २० ॥

[ आदित्सुं कुत्सितं वत्सं वीभत्सं मत्सरात्मकम् ] (१) ।
परदारपरं भीरुं दारुणं वैरिणं सताम् ॥ ४५ ॥
तुच्छं त्यक्तवैराग्यं स्वत्वं (२) लुप्तकबान्धवम् ।
स्वादित्सुं कुत्सितं वीतवीभत्सं मत्सरात्मकम् ।
सुखिनं मुखरं दुष्टं दुर्मुखं मूर्खमानसम् ॥ ४६ ॥
प्रत्यग्रमुग्रं व्यग्रेहमग्रगण्यं दुरात्मनाम् ।
भ्रष्टव्रतं तमःस्पृष्टं क्लिष्टमिष्टापहं नृणाम् ॥ ४७ ॥
स्वार्थकृत्ये प्रसक्तार्थं निरर्थारम्भणं शठम् ।
ईदृग्विधं गुरुः शिष्यं न गृह्णीयात् कथञ्चन ॥ ४८ ॥
यदि गृह्णाति तद्दोषः प्रायो गुरुमपि स्पृशेत् ।
मन्त्रिदोषो यथा राज्ञि पत्यौ जायाकृतो यथा ॥ ४९ ॥
तथा शिष्यकृतो दोषो गुरुमेति न संशयः ।
स्नेहाद्वा लोभतो वापि योऽनुगृह्णाति (३) दीक्षया ॥ ५० ॥
तस्मिन् गुरौ सशिष्ये तु देवताशाप आपतेत् ।
मधुद्विषि महादेवे मातापित्रोर्महीभृति ॥ ५१ ॥
भक्तिर्या सा पदाम्भोजे कार्या निजगुरोः सदा ।
छायाछापादुकोपानद्दण्डाद्यं शयनासने ।
यानं मनोगतं चान्यदन्तेवासी न लङ्घयेत् ॥ ५२ ॥
ध्यात्वा (४) विवादं स्वातन्त्र्यं कामितां कामजृम्भिकाम् ।
निद्राकुतर्कक्रोधांश्च त्यजेद्गुरुगृहे सदा ॥ ५३ ॥
मयाम्यधर्मविस्मृतोत्सर्गनिष्ठीवनादिकम् ।
परित्यजेत् परिस्नाता वसिच (५) गुरुमन्दिरे ॥ ५४ ॥

---

(१) चिह्नितांशोऽयं पुस्तकान्तरे दृष्टः ।
(२) "तुच्छं त्यक्तवैराग्यं तु स्वम्" इति पाठान्तरम् ।
(३) "योऽनुगृह्णाति" इति पाठान्तरम् । (४) "ध्यानम्" इति पाठान्तरम् ।
(५) "आश्रमम्" इति पाठान्तरम् ।

तस्य पादारविन्दोत्थरजःपटलभूषणः (१) ।
स्थानमप्राप्य न प्राप्यं प्रायो बुद्धिमतेप्सितम् ॥ ३३ ॥
नित्यशः कायवाक्चित्तैस्त्रिद्देरकाव्दाधिकावधि ।
परिचर्य्यापरः शिष्यः स्यात् सुसंयतमानसः ॥ ३४ ॥
तन्त्वयाविषमालक्ष्यं तथाऽवितथवादिनम् ।
मातृतः पितृतः शुद्धं बुद्धिमन्तमलोलुपम् ॥ ३५ ॥
अस्तेयवृत्तिमास्तिक्ययुक्तं मुक्तिकृतोद्यमम् ।
अकलङ्कं कृपा हीनमहीनद्रव्यमानसम्॥ ३६ ॥
ब्रह्मचर्यरतं नित्यं परिचर्य्यापरं गुरोः ।
अल्पाशनिद्रं पूजायामनल्पकृतकल्पनम् ॥ ३७ ॥
अधीतवेदं स्वाधीनमनाधिं व्याधिवर्ज्जितम् ।
तरुणं करुणावासं परितोषकरं गुरोः ॥ ३८ ॥
सुवेषमेषणातीतममलं विमलाशयम् ।
सुप्रसन्नमसन्नाङ्गं सदा सविहितं गुरोः ॥ ३९ ॥
परोपकारनिरतं विरतं परदूषणे ।
मातृवद्गुरुपत्नीश्च भ्रातृवत्तत्सुतानपि ॥ ४० ॥
अरन्तमस्मरावाधं स्मितोपेतमविस्मितम् ।
परिग्रहेत् परीक्ष्यैवं शिष्यमेवंगुणं गुरुः ॥ ४१ ॥
अनमं मनसं क्लिवं (२) क्लिष्टं कष्टान्वयायजम् ।
दम्भान्वितमगम्भीरं चण्डं पण्डितमानिनम् ॥ ४२ ॥
रागिणं रोगिणं भोगलालसं वाक्स्मितम् ।
रौद्रं दरिद्रं निद्रालुमायूनं चुद्रचेष्टितम् ॥ ४३ ॥
मूगमन्धं वधिरं पङ्गुं व्यङ्गमनङ्गलम् ।
अतिदीर्घमतिह्रस्वमतिस्थूलं कृशात्मकम् ॥ ४४ ॥

(१) "रज पटलकृषण" इति पाठान्तरम् ।
(२) "ममचसम" इति पाठान्तरम् ।

यदाश्रया विप्रकृतिस्वभावतो
विभिन्नतारादिसमुत्थितौजसः ।
जगन्ति पुष्णन्ति रवीन्दुवह्नयो
नमोऽस्तु तस्मै परिपूर्णतेजसे ॥ ६२ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे त्रयस्त्रिंशः पटलः ॥ * ॥



ग्राहीक्तिमनृतं निद्रामृणञ्च क्रयविक्रयम् (१)
परित्याज्यं गुरौ तस्य सपत्नैश्च समागमम् ॥ ५५ ॥
इष्टं वानिष्टमादिष्टं गुरुणा यत्तु गुर्व्वपि ।
त्वरया परया कुर्य्यादुद्वेगा सम्यगजिह्मया ॥ ५६ ॥
कर्म्मणा मनसा वाचा सदा भक्तियुजा गुरुम् ।
निर्व्याजं पूजयेच्छिष्यो निजकार्य्यप्रसिद्धये ॥ ५७ ॥
लोकोद्वेगकरी या च या च मर्म्मनिकृन्तनी ।
स्थित्युच्छेदकरी (२) या च तां गिरं नैव भाषयेत् ॥ ५८ ॥
रम्यमप्युज्ज्वलमपि मनसोऽपि (३) समीहितम् ।
लोकविद्वेषणं वेशं न स्त्रीयात् कदाचन ॥ ५९ ॥
इत्याचारयुतः सम्यगाचार्य्यं यः समर्च्चयेत् ।
कृतकृत्यः स वै शिष्यः परत्रेह च नन्दति ॥ ६० ॥

देवानृषीनपि पितॄनतिथींस्तथाग्नी-
न्नित्योद्यतेन मनसा दिनशोऽर्च्चयेद्यः ।
इष्टानवाप्य सकलानिह भोगजातान्
प्रेत्य प्रयाति परमं पदमादिपुंसः ॥ ६१ ॥

इत्थं मूलप्रकृत्यचरविकृतिलिपिव्रातजातप्रहर्च्चे
वेलाद्यावहभूतेन्द्रियगुणरविचन्द्राग्निसंप्रोतरूपैः ।
मन्त्रैस्तद्देवताभिर्म्मुनिभिरपि जपध्यानहोमार्चनाभि
स्तन्त्रेऽस्मिन् पञ्चभेदैरपि (४) कमलज ते दर्शितोऽयं प्रपञ्चः ॥ ६२ ॥

---

(१) "वस्तुविक्रयम्" इति पाठान्तरम् ।
(२) "स्थित्युद्वेगकरी" इति पाठान्तरम् ।
(३) "मनसापि" इति पाठान्तरम् ।
(४) "मन्त्रभेदैरपि" इति पाठान्तरम् ।

यदाश्रया विप्रकृतिस्वभावतो
विभिन्नताराादिसमुत्थितौजसः ।
जगन्ति पुष्णन्ति रवीन्दुवह्नयो
नमोऽस्तु तस्मै परिपूर्णतेजसे ॥ ६२ ॥

॥ * ॥ इति श्रीप्रपञ्चसारे त्रयस्त्रिंशः पटलः ॥ * ॥

---

## चतुस्त्रिंश: पटल: ।

अथ लवणमनुं वदामि साङ्गं सजपं सप्रतिपत्तिकं सहोमं ।
विविधद्विहितेन येन सर्व्वां जगतीमात्मवशे करोति मन्त्री ॥ १
लवणाम्भसि चेत्याद्या द्वितीया लवणेति च ।
दहेति च तृतीया स्यात् दग्धेति च चतुर्थ्यपि ॥ २ ॥
ऋक् पञ्चमी च या ते स्यादयथा प्रोक्तमथर्व्वणि ।
ऋग्भिराभिस्तु पञ्चाङ्गं पञ्चभिर्व्वा समीरितम् ॥ ३ ॥
विद्याचरैः षडङ्गं वा प्रणवाद्यैर्निगद्यते ।
पञ्चभिश्च त्रिभिरपि पञ्चभिः करणाचरैः ।
सपञ्चभिर्युगार्णेन जातियुक्तैः समीरितम ॥ ४ ॥
अङ्गिराः स्यादृषिश्छन्दोऽनुष्टुप् तद्देवता अपि (१) ।
अग्नीरात्रिस्तया दुर्गा भद्रकाली समीरिता ॥ ५ ॥
अरुणोऽरुणपद्मजसन्निभः स्रुवशक्तिवराभययुक्तकरः ।
अमिताचिरजातगतिर्विलसन्नयनत्रितयोऽवतु वो दहनः ॥ ६ ॥
नीलतराशुककेशकलापा नीलतनुर्निविड़स्तनभागा ( २ ) ।
साङ्कुशपाशसशूलकपाला यामवती भवतोऽवतु नित्यम् ॥ ७ ॥
करकमलविराजच्चक्रशङ्खासिशूला
परिलसितकिरीटा पातितानेकदैत्या ।
त्रिनयनलसिताङ्गी देवसिद्धादिपूज्या ( ३ )
पवनमस्तनिभाङ्गी पातु कात्यायनी व ॥ ८ ॥

---

(१) "अनुष्टुपत्रिष्टुप च देवता" इति पाठान्तरम ।
(२) "त्रिपुलस्तनभारा" इति पाठान्तरम ।
(३) "तिग्मरश्मिप्रकाशा" इति पाठान्तरम् ।

सुरौद्रसितदंष्ट्रिका त्रिनयनोर्द्धकेशोत्त्वणा ।
कपालपरशूलसड्डमरुकत्रिशूलाकुला ।
घनाघननिभा रणद्रुचिरकिङ्किणीमालिका
भवद्विभवसिद्धये भवतु भद्रकाली चिरम् ॥ ८ ॥
अयुतं नियतो मन्त्रमकूपञ्चकसमन्वितम् (१) ।
प्रजपेत्त्रिसहस्रं वा सम्यगेनं समाहितः ॥ १० ॥
दशांशेन हुनेत्सिद्धैः हविषा घृतसंयुजा ।
एवं कृते प्रयोगार्हो मन्त्रो भूयान्नचान्यथा ॥ ११ ॥
वह्निरात्रौ वरे स्यातां वश्याकर्षणकर्मणोः ।
दुर्गाभद्रे ( २ ) तथा देव्यौ शस्ते मारणकर्मणि ॥ १२ ॥
आरभ्य कर्मकृन्मन्त्री तृतीयां कृष्णपक्षजाम् ।
संदीक्षितो भवेत्पूते ( ३ ) मन्दिरे मन्त्रजापवान् ॥ १३ ॥
निखन्यात्तत्र कुण्डञ्च दोर्मात्रं त्र्यस्रमेखलम् ।
चतुष्कं सुन्दराकारं पुत्तलीनाञ्च कारयेत् ॥ १४ ॥
एकां साध्यर्क्षवृक्षेण शालीपिष्टेन चापराम् ।
चक्रिहस्तमृदा चान्यां मधूच्छिष्टेन चापराम् ॥ १५ ॥
तासु हृदेशलिखितसाध्याख्यासु समाहितः ।
सम्यक् संस्थापयेत् प्राणान् साध्यादानीय साधकः ॥ १६ ॥
उत्तानां दारवीं कुण्डे खनेन्मन्त्राभिमन्त्रिताम् ।
पिष्टजां विष्टरस्याधः पादस्थाने च मृण्मयीम् ॥ १७ ॥
लम्बयेदम्बरे सिक्थमयीमूर्द्धमधोमुखीम् ।
पुनः कृष्णाष्टमीरात्रौ पूर्व्वयामे गते सति ॥ १८ ॥

---

(१) "नियतो मन्त्री मन्त्रमकूपञ्चकान्वितम्" इति पाठान्तरम् ।
(२) "दुर्गाकाल्यौ" इति पाठान्तरम् ।
(३) 'पूतः' इति पाठान्तरम् ।

रक्तमाल्याम्बरो मन्त्री कृतरक्तानुलेपनः ।
सम्यक् कृतलिपिन्यासः प्राणायामादिकृच्छुचिः ॥ १८ ॥
कुडवं पीतलवणं सुश्लक्ष्णं परिचूर्णितम् ।
दधिक्षीद्रघृतक्षीरैः प्रोचयित्वा सुशोधितम् ॥ २० ॥
आलोड्य गुडमध्वाज्यैर्विसृष्टावयवामथ ।
तेन पुत्तलिकां मन्त्री चार्वङ्गीं कारयेद्बुधः ॥ २१ ॥
तस्याञ्च स्थापयेत्प्राणान् गुर्वादेशविधानतः ।
अष्टोर्द्ध्वशतसंख्यं वा तथाष्टोर्द्ध्वसहस्रकम् ॥ २२ ॥
ऋक्पञ्चकं पञ्चविंशत्संख्यं प्रतिकृतिं स्पृशन् ।
जपित्वाङ्गानि विन्यस्येत् स्वाङ्गे प्रतिकृतावपि ॥ २३ ॥
सतारैश्चिटिमन्त्रार्णैश्चतुर्विंशतिसंख्यकैः ।
शिरोललाटदृक्कर्णनासास्यचिबुकेष्वपि ॥ २४ ॥
सकण्ठहृदयोरोजनाभिकुक्षिकटीषु च ।
मेढ्रपायूरुजान्वग्रजङ्घाङ्घ्रिषु च विन्यसेत् ॥ २५ ॥
अधोगुह्यादभेदः स्यादूर्द्ध्वं भेदो द्विके सति ।
आत्मन्येवं प्रविन्यस्य पुनः प्रतिकृतौ न्यसेत् ॥ २६ ॥
अङ्गुष्ठसन्धिप्रपदजङ्घाजानूरुपायुषु (१) ।
सलिङ्गनाभिजठरहृदयेषु स्तनद्वये ॥ २७ ॥
कन्धराचिबुकास्येषु घ्राणदृक्कर्णयुग्मके ।
ललाटशिरसोर्न्यस्येत् प्रतिमायाञ्च संघशः ॥ २८ ॥
उपलिप्तेऽथ कुण्डेऽन्तर्वेदिर्गोमयवारिणा ।
साध्यसंमुखमासीन आदध्याद्धव्यवाहनम् ॥ २९ ॥
प्रज्वाल्य साध्योडुतरुकाष्ठैरभ्यर्च्य दिक्क्रमात् ।
राजीकुसीतपुष्पाढ्यपक्षे राजतादिके ॥ ३० ॥

---

(१) 'पायुषु' इत्यत्र "अङ्गुष" इति पाठान्तरम् ।

देवतां प्रति पाद्यार्घ्यं दत्वा कार्य्यार्थसिद्धये ।
उपतिष्ठेद्धुतस्यादावन्ते मन्त्रैरितीरितैः ॥ ३१ ॥
त्वमाननममित्रघ्नं (१) निशाया हव्यवाहनः ।
हविषा मन्त्रदत्तेन त्वमो भव तया सह ॥ ३२ ॥
जातवेदो महादेव तप्तजाम्बूनदप्रभ ।
स्वाहापते विश्वभच्च लवणं दह शत्रुहन् ॥ ३३ ॥
ईशे शर्व्वरि सर्व्वाणि ग्रस्तं मुक्तं त्वया जगत् ।
महादेवि नमस्तुभ्य वरदे कामदा भव ॥ ३३ ॥
तमोमयि महादेवि महादेवस्य सुव्रते ।
एषा मे पुरुषं हृत्वा वशमानय देहि मे (२) ॥ ३५ ॥
दुर्गे सर्गादिरहिते दुर्गसरोधनार्गले ।
चक्रशङ्खधरे देवि दुष्टशत्रुभयङ्करि (३) ॥ ३६ ॥
नमस्ते दह शत्रुं मे वशमाय चण्डिके ।
शाकम्भरि महादेवि शरणं मे भवानघे ॥ ३७ ॥
भद्रकालि भवाभीष्टे भद्रसिद्धिप्रदायिनि ।
सपत्नान् मे हन हन दह शोषय तापय ( ४ ) ॥ ३८ ॥
शूलासिशक्तिवज्राद्यैरुत्कृत्योत्कृत्य मारय ।
महादेवि महाकालि रक्षास्मानक्षतात्मके ॥ ३९ ॥
पुन. प्रतिकृतेरङ्गसप्तकं निशितायसा ।
दक्षपादादिकं छित्त्वा पञ्चर्च्च प्रजपेन्मनुम् ॥ ४० ॥
साध्यं संस्मृत्य सितधीर्जुहुयात् सप्तसंख्यया ।
दक्षिण चरणं पूर्व्वं ततो दक्षार्द्धकं पुन. ॥ ४१ ॥

---

(१) "देवाननममित्रघ्न" इति पाठान्तरम ।
(२) "देव्युमे" इति पाठान्तरम ।
(३) "दुष्टशत्रुभयङ्करि" इति पाठान्तरम् ।
(४) "घातय" इति पाठान्तरम् ।

पूर्व्वोक्ताभिः पुत्तलीभिः कुण्डे दक्षिणदिङ्मुखः।
दुर्गां वा भद्रकालीं वा प्रणिपत्य यथोचितम् ॥ ५३ ॥
उपस्थितेऽर्द्धरात्रे तु सव्यपाणिस्थमस्तकः।
वामपादं समारभ्य जुहुयात् पूर्व्वसंख्यया ॥ ५४ ॥
समापयेद्दक्षपादे विकारेणायसे वशी (१)।
विसंग्राहप्रयोगेण मारयेद्रिपुमात्मनः ॥ ५५ ॥
तस्यां रात्रामुपोष्याथ परेऽहनि तु साधकः।
प्राणायामादिभिरपि गायत्रीजपहोमकैः।
विमुक्तपातको भूत्वा स पुनर्व्विहरेद्वशी ॥ ५६ ॥

अथवा लवणैः परागभूतैर्म्मधुराक्तैः पुनरष्टमीनिशीथम्।
जुहुयाच्च चतुर्द्दशीनिशान्तं कुडवोन्मितमेभिरेव मन्त्रैः॥ ५७ ॥
नारीं नरं वा नगरं नृपान् वा ग्रामान् द्विजान् वा मनसोऽनुरूपम्।
वशीकरोत्येव हुतक्रियेयं चिराय नैवात्र विचारणीयम् ॥ ५८ ॥
इति लवणमनोर्व्विधानमेवं प्रणिगदितं विविधप्रभेदभिन्नम्।
विधिवदसुमादरेण संप्रयुञ्जन् व्रजति फलं निजवाञ्छितं चिराय ॥५९॥

आकल्पयन्त्यपामार्गराजीघृतहवींषि च।
पृथगष्टोत्तरशताहुत्या हुत्वा वलिं हरेत् ॥ ६० ॥
दशस्वाशासु दिवि च मन्त्रैरेतैर्यथाक्रमम्।
यो मे पूर्व्वगतः पाप्मा पावकेनेह कर्म्मणा ॥ ६१ ॥

इन्द्रस्त्वं देवो राजा जम्भयतु स्तम्भयतु मोहयतु वशयतु मारयतु नाशयतु वलिं तस्मै प्रयच्छतु क्षतं मम शर्म्म मम शिवं मम शान्ति स्वस्त्ययनं मम यो मेऽग्निगतः यो मे यमगतः यो मे निऋति गतः यो मे वरुणगतः यो मे वायुगतः यो मे सोमगतः यो मे ईशानगतः यो मे अधोगतः यो मे ऊर्द्ध्वगतः यो मे पातालगतः यो मे दिवि गतः

(१) "विकारेणायतो वशी" इति पाठान्तरम्।

दक्षहस्तं तृतीयं स्यान्निलादूर्द्धं चतुर्थकम् ।
पञ्चमं वामहस्तं स्यात् षष्ठं वामार्द्धमेव च ॥ ४२ ॥
सप्तमं वामपादं स्यादन्यापि स्याद्धुतक्रिया ।
सप्तसप्तविभागो वा क्रमादङ्गेषु सप्तसु ॥ ४३ ॥
एकादशांशभिर्व्वा तदङ्गैः सप्तभिर्हुनेत् ।
होमोऽन्यथा वा पूर्व्वन्तु दक्षिणं चरणं भवेत् ॥ ४४ ॥
द्वितीयो दक्षिणकरस्तृतीयं शिर उच्यते ।
वामबाहु (१)श्चतुर्थन्तु मध्यादूर्द्धन्तु पञ्चमम् ॥ ४५ ॥
अधोभागस्तु षष्ठः स्याद्वामपादस्तु सप्तमः ।
हुत्वैवं पूर्व्ववत् प्रोक्तैरुपस्थाय च मन्त्रकैः ॥ ४६ ॥
अर्च्चयित्वा दण्डदीर्घं प्रणमेदग्न्यवाहनम् ।
सुवर्णवस्त्रयुक्तां गां (२) शोणां दद्यात् सुतर्णकाम् ॥ ४७ ॥
दक्षिणां सप्तकर्षन्तु दद्यान्मारणकर्म्मणि ।
अंशुकं रुचकं धान्यं दत्त्वा संप्रीणयेद्गुरुम् ॥ ४८ ॥
एवं कृतेन मन्त्रीष्टं लभते होमकर्म्मणा ।
अथवा मारणाकाङ्क्षी साध्यवामाङ्घ्रिपांशुभिः ॥ ४९ ॥
सनिम्बतिलसिद्धार्थलवणकृत्तैलसंयुतैः ।
हिङ्गुत्रिकटुकोपेतैर्म्महिषीमूत्रविड्विषैः ॥ ५० ॥
वराहपारावतयोः पुरीषेण समन्वितैः ।
एतैर्व्विमिश्रयित्वा तु लोणं पूर्व्वोक्तसंख्यकम् ॥ ५१ ॥
पूर्व्ववत् पुत्तलीं तेन लोणचूर्णेन कारयेत् ।
प्राणान् प्रतिष्ठापयेच्च तत्र पूर्व्वोक्तसंख्यया ॥ ५२ ॥

---

(१) "वामपार्श्वं" इति पाठान्तरम् ।
(२) 'मध्यमांशु मधुका गाम्" इति पाठान्तरम्

पूर्व्वोक्ताभिः पुत्तलीभिः कुण्डे दक्षिणदिङ्मुखः ।
दुर्गां वा भद्रकालीं वा प्रणिपत्य यथोचितम् ॥ ५३ ॥
उपस्थितेऽर्द्धरात्रे तु सव्यपाणिस्थशस्त्रकः ।
वामपादं समारभ्य जुहुयात् पूर्व्वसंख्यया ॥ ५४ ॥
समापयेद्दक्षपादे विकारेणायसे वशी (१) ।
त्रिसंन्ध्यप्रयोगेण मारयेद्रिपुमात्मनः ॥ ५५ ॥
तस्यां रात्र्यामुपोष्याथ परेऽहनि तु साधकः ।
प्राणायामादिभिरपि गायत्रीजपहोमकैः ।
विमुक्तपातको भूत्वा स पुनर्व्विहरेद्वशी ॥ ५६ ॥
अथवा लवणैः परागभूतैर्मधुराक्तैः पुनरष्टसीनिशीथम् ।
जुहुयाच्च चतुर्द्दशीनिशान्तं कुड्वोम्मितमेभिरेव मन्त्रैः ॥ ५७ ॥
नारीं नरं वा नगरं नृपान् वा ग्रामान् द्विजान् वा मनसोऽनुरूपम् ।
वशीकरोत्येव हुतक्रियेयं चिराय नैवात्र विचारणीयम् ॥ ५८ ॥
इति लवणमनोर्व्विधानमेवं प्रणिगदितं विविधप्रभेदभिन्नम् ।
विधिवदमुमादरेण संप्रयुञ्जन् व्रजति फलं निजवाञ्छितं चिराय ॥५९॥
आकलयन्त्यपामार्गराजीघृतहवींषि च ।
पृथगष्टोत्तरशताहुत्या हुत्वा बलिं हरेत् ॥ ६० ॥
दशस्वाशासु दिवि च मन्त्रैरेतैर्यथाक्रमम् ।
यो मे पूर्व्वगतः पाप्मा पावकेनेह कर्म्मणा ॥ ६१ ॥
इन्द्रस्त्वं देवो राजा जम्भयतु स्तम्भयतु मोहयतु वशयतु मारयतु नाशयतु बलिं तस्मै प्रयच्छतु क्षतं मम शुभं मम शिवं मम शान्ति स्वस्त्ययनं मम यो मेऽग्निगतः यो मे यमगतः यो मे निर्ऋति गतः यो मे वरुणगतः यो मे वायुगतः यो मे सोमगतः यो मे ईशानगतः यो मे अधोगतः यो मे ऊर्द्धगतः यो मे पातालगतः यो मे दिवि गतः

(१) "विकारेणायतो वशी" इति पाठान्तरम् ।

पापा पावकेनेह कर्म्मणा सूर्य्यस्त्वं देवो राजा जम्भयतु स्तम्भयतु मोहयतु मारयतु नाशयतु बलिं तस्मै प्रयच्छतु कृतं मम शुभं मम शिवं मम शान्तिस्वस्त्ययनं मम यो मे सर्व्वगतः।

एव दिशासु दशसु देवताभ्यो बलिं हरेत्।

बलाविवं कृते शत्रोराशु कृत्वा प्रणश्यति॥

प्रणवयुगलग्वीभ्यां युगान्तं स्वकण्ठे शतश्च तदत् स्वकुलिश संतेपामग्रे भुवो भ्रमति वासरपुरगं द्वारे द्वारे श्रद्धुगमायया वलयितमङ्गे जम्भयलिखेत् कुरुते जड़म्।

स्तम्भयस्तम्भयौ वीप्सा तया वन्धयमोहयौ।

इत्यनन्तास्तयायुक्ते जम्भाद्यष्टौ द्विठान्तिकाः॥ ६२॥

॥ * ॥ इति श्रीप्रपञ्चसारे चतुस्त्रिंशः पटलः॥ * ॥



# पञ्चत्रिंशः पटलः ।



प्राणप्रतिष्ठानमनोर्विधानं प्रवक्ष्यते संप्रति सर्व्वसिद्धै ।
यस्मादृतेऽस्मिन् कथिताः प्रयोगा व्यर्था भवेयुर्गतजीवकल्पाः ॥ १ ॥
प्रोक्ता पूर्व्वममुष्य मन्दमथ च प्राणा इह प्राणका
स्तद्वज्जीव इह स्थितेति च तथा सर्व्वेन्द्रियाणीति च ।
तद्वद्वाङ्मनसौ दृशं श्रुतिमयो प्राणश्च सप्राणकं
सैवेहागतयामयुक् सुखचिरे तिष्ठन्तु ठद्वन्द्वयुक् ॥ २ ॥
मन्त्रस्यास्य विधिर्हरिय हर इत्येते मुनित्वे स्थिता-
श्छन्दयर्ग्यजुषं समामकमथोऽतिच्छन्दसं वा भवेत् ।
स्रष्ट्री या जगतामनादिनिधना सर्व्वस्य चेष्टाकरी
प्राणाख्या प्रकृतिः क्रियामयवपुर्देवी परा देवता ॥ ३ ॥
प्रत्येकं कादिवर्गैः प्रतिगतलिपिभिर्बिन्दुयुक्तैर्धराद्यैः
शब्दाद्यैः श्रोत्रमुख्यैर्व्वदनकरमुखैस्तत्क्रियाभिः क्रमेण ।
बुद्ध्याद्यैर्यात्मनोऽस्तैरुपरि च विलसज्जातिभिः षडभिरेव
कुर्य्यादङ्गानि सम्यग्विशदमतिरयो विश्वरूपत्वसिद्धै ॥ ४ ॥
नाभेर्देशादापदं पाशवीजं हृद्देशादानाभिदेशञ्च शक्तिम् ।
आहृद्देशं मस्तकादङ्कुशाख्यं न्यस्त्वा यादीन् धातुषु न्यस्य मन्त्र ॥ ५ ॥
प्राणे जीवे चैव हंसद्वयार्णं न्यस्येन्मूलं व्यापकं मस्तकादि ।
एवं न्यस्य प्राणशक्तिस्वरूपां विश्वीं ध्यायेदात्मरूपाञ्च देवीम् ॥ ६ ॥
रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढ़ा कराब्जैः (१)
पाशं कोदण्डमिक्षूद्भवमथगुणमप्यङ्कुशं पञ्चबाणान् ।

---

(१) "कराब्जै" इति पाठान्तरम् ।

विभ्राणाच्छकपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा वः ॥ ७ ॥
ध्यात्वा देवीमेवं प्रजपेल्लक्षं मनुं समाहितधीः ।
आज्येनान्ते जुहुयाद्वरणा वा तद्दशांशतो मन्त्री ॥ ८ ॥
शाक्ते पीठे देवीं षट्कोणस्थैः प्रजेद्ग्रहरिरुद्रैः ।
वाणीलक्ष्मीगिरिजासहितैरङ्गैश्च मातृलोकेशैः ॥ ९ ॥
जपेच्चतुर्भिरेवं प्रतिवारैर्नित्यमेव मन्त्रितमः ।
[ एवं संसिद्धमनुर्वैश्यायान्यारभेत कर्माणि ] (१) ॥ १० ॥
पाशाङ्कुशान्तरितशक्तिमनोः परस्तादुच्चार्य यादिवसुवर्णगणं सहंसं ।
पश्चादमुष्य पदमुच्चतमः प्रयोगं सन्त्रोऽयमित्यमुदितो(२) यहसंख्यया वा ॥११॥
मृता वैवस्वता चैव जीवहा प्राणहा तथा ।
आकृष्या ग्रसना (३) चैव भ्रमदा (४) विस्फुलिङ्गिनी ॥ १२ ॥
चेत्स्वप्रतिहन्त्रीति प्राणदूत्यश्च यादिकाः ।
बद्ध्वा साध्यं पाशबीजेन शक्त्या गृह्णन्साक्ष्याङ्कुशेनाथ यादीन् ।
दूतीयोक्त्वा साध्यनामाथ धातूनेवं मन्त्रो यावदास्ते सवीर्यः ॥ १३ ॥
सुप्ताशेषजने निशीथसमये साध्ये स्वपित्यादरा
दारुह्य स्ववशं निधाय हृदये साध्याकृतेः कीटकम् ।
बद्ध्वा तच्च निपीड्यमेव सहसा कालस्य यस्याशिर-
स्यातात्र क्षुभिताखिलेन्द्रियगणं साध्यं स्मरेत् साधकः ॥ १४ ॥
वायव्याग्नेयैन्द्रवारीशमहेशक्रव्यात्सोमप्रेतराजमध्यगेषु ।
स्थानेष्वेतेष्वष्टयादीन् सहंसान् भङ्गान् ध्यायेत् विन्दुतन्तुप्रवहान्(५) ॥१५॥

---

(१) चिह्नितांशोऽयं पुस्तकान्तरे न दृश्यते ।
(२) "पश्चादमुष्य पदमुच्चरेत् प्रयोग" इति पाठान्तरम् ।
(३) "घसना" इति पाठान्तरम् ।
(४) "भ्रमरा" इति पाठान्तरम् ।
(५) "नीरबिन्दुप्रवाहान्" इति पाठान्तरम् ।

स्त्रीयेऽप्येवं संस्मरेद्धृत्सरोजे भ्रद्गीरूपान्निर्गतान् श्वासमार्गैः।
साध्यात्मस्थान् चञ्चरीकान् गृहीत्वा स्वीयं स्थानं पूर्व्ववत् संप्रविष्टः(१) ॥१६॥

बीजानि रक्तानि तु वश्यकर्म्मण्यभीधराभाण्यभिचारकाले।
धूम्राणि विद्वेषविधौ सहोमे पीतानि संस्तम्भविधौ स्मरेच्च ॥ १७ ॥

अथवा साध्यप्राणान् मण्डूकाकारधारिणो ध्यायेत्।
स्वीयान् भुजगाकारानभिचारादौ नृशंसकर्म्मविधौ ॥ १८ ॥

प्राणप्रतिष्ठाकर्म्मैवं विधायैकादशावरम्।
पुत्तल्यादौ स्वचित्ते वा तांस्तु संस्तम्भयेद्ध्रुवा (२) ॥ १९ ॥

आकृष्टानां साध्यदेशादसूनां पुत्तल्यादावप्ययं स्यात्प्रकारः।
किन्तु स्वीये हृत्सरोजे प्रवेशो वश्याकृष्योरेव नाचाभिचारे ॥ २० ॥

पाशादिविकयुक्तमूलहृदयभ्रूमध्यसूत्रायिता (३)
माग्निः साध्यललाटरन्ध्रपथतोऽप्यामूलमाजग्मुषी।
योन्यावात्महृदस्त (४) मेवमनिशं भ्राम्यत्यसौ चिन्तिता
शक्तिर्जन्मगतान्यपीह वशयेत् साध्यं तथाकर्षयेत् ॥ २१ ॥

प्राणप्रतिष्ठाविधिरेवमुक्तः साङ्गः सयोगो विनियोगयुक्तः।
यस्मिन् प्रवीणो गिरिकाननादीन् प्रचालयेत् किं पुनरात्मयुक्तान् ॥२२॥

॥ * ॥ इति श्रीप्रपञ्चसारे पञ्चत्रिंशः पटलः ॥ * ॥

---

(१) "संप्रवेश्याप्" इति पाठान्तरम्।
(२) "भुवम्" इति पाठान्तरम्।
(३) "सूत्रायिता" इति पाठान्तरम्।
(४) "योन्यात्मसंहृदयम" इति पाठान्तरम्।

## षट्त्रिंशः पटलः ।

धर्म्मवित्तसुखमोक्षफलाप्तौ योषितामपि नृणां प्रवरं यत् ।
मन्त्ररत्नमतिगुह्यमिदानीं वक्ष्यते मतिमतामपि रम्यम् ॥ १ ॥
दौर्भाग्यश्चाधिदारिद्र्यजराशोकभयातुराः ।
भर्त्तृराजाभिभूताश्च स्त्रीविप्रार्त्तास्तदीप्सवः ॥ २ ॥
पुत्रभृत्यार्थिनो युद्धजयकामान्यवञ्चिताः (१) ।
हृतार्थाः (२) क्लिष्टससारवश्यसंवननार्थिनः ॥ ३ ॥
बलिसिद्धयर्थिन (३) श्चैव ग्रन्तर्द्धानाभिकाङ्क्षिण. ।
शत्रुभिः परिभूताश्च सर्व्वविघ्नैरुपद्रुताः ॥ ४ ॥
मारणोच्चाटनद्वेषस्तम्भाकर्षणकाङ्क्षिणः ।
भजेयुः सर्व्वथैवैनं मन्त्र त्रैलोक्यमोहनम् ॥ ५ ॥
हृदयपुरुषोत्तमान्ते त्वप्रतिरूपेति चापि संभाष्य ।
लक्ष्मीनिवासपरतो जगदादौ सकल द्दत्युदाहृत्य ॥ ६ ॥
क्षोभय (४) सर्व्वपदान्ते स्त्रीहृदयविदारण (५) त्रिभुवनेति ।
समनोन्मादकरेति च सुरासुरान्ते वदेन्मनुजपदम् ॥ ७ ॥
भूयश्च सुन्दरीजनमनांस्यथो तापयादिकान् वीप्सन ।
तापय दीपय शोषय मारय भृगुकामिकालवान्ते तु (६) ॥ ८ ॥

---

(१) "जयकामान्यवाञ्छिता" इति पाठान्तरम ।
(२) "भूतार्त्तौ" इति पाठान्तरम् ।
(३) "कम्वसिद्धयर्थिन" इति पाठान्तरम ।
(४) "क्षोभय" इति पाठान्तरम् ।
(५) "रक्षोहृदयविदारण" इति पाठान्तरम ।
(६) पुस्तकान्तरे 'कवान्ते तु" इत्यस्यानन्तरे "मोहय" इत्यस्य पाक 'निद्रां चानिनमाभाष्य मुमाईपि तत परम्" इत्यधिक श्लोकार्द्धं दृश्यते ।

मोहय (१) द्रावयेति च भूयश्चाकर्षयेत्युदीर्य्यान्तः।
समस्त परमसुभगं (२) सर्व्वप्रदयोस्तु मध्यतः प्रवदेत् ॥ ९ ॥
सौभाग्यस्ष्टिवङ्गीन् ससर्व्वादिकं कामशब्दश्च।
मन्त्री श्रीकण्ठाख्यं (३) सश्रवणं कं हनद्दयञ्च वदेत् ॥ १० ॥
चक्रेण वाथ गदया खङ्गेन च सर्व्ववाणेश्च।
भिन्दद्दयञ्च पाशेनान्ते चहयद्दयं समाभाष्य ॥ ११ ॥
भूयोऽङ्कुशेन ताड़य तुरुयुग्मकञ्च किञ्च प्रवदेत्।
तिष्ठसि तावद्यावत् समीहितं मे समाभाष्य ॥ १२ ॥
सिद्धं भवतु च हुंफट् नमोऽन्तिकं मन्त्रमुद्धरेन्मन्त्री।
मन्मथवीजोपेतं ताराद्यं सर्व्वसिद्धिदं भवति ॥ १३ ॥
मन्त्रपदानि द्वादश विद्यादाद्यापदानि तावन्ति।
सम्बुद्धन्ता हुंफट् नमोऽन्वितान्येमे मन्त्राः स्युः (४) ॥ १४ ॥
मध्यलवान्ते च परे गदिता मुनिभिर्मनोरमुष्य पुनः।
ऋषिस्तु जैमिनिः प्रोक्तश्छन्दश्च जगतीष्यते ॥ १५ ॥
सर्व्वलोकशरण्योऽसौ देवता पुरुषोत्तमः।
पुरुषोत्तमत्रिभुवनमनोन्मादकरेति च ॥ १६ ॥
हृदयं सकलान्ते च जगत्क्षोभण इत्यपि।
सनक्षोदयितेत्येवं शिरोमन्त्र उदाहृतः ॥ १७ ॥
मन्मथोत्तमशब्दान्ते श्रङ्गजे कामदीपिनि।
शिखा तु भगशब्दन्तु परमाद्यन्तदन्ततः ॥ १८
शर्व्वसौभाग्य इत्यन्ते करभप्रतिरूपकम् (५)।
केशवस्मरवर्णान्ते जातिश्च कवचं विदुः ॥ १९ ॥

---

(१) "भवञ्च" इति पाठान्तरम्। (२) "परमशुभान्ते रं मानम्" इत्यपि पाठः क्वचिद्दृश्यते।
(३) "तन्द्री श्रीकण्ठाद्यास्त्रवणकम" इति पाठान्तरम्।
(४) "सम्बुद्धन्ता हुंफट पदान्वितान्येवं मन्त्राः स्युः" इति पाठान्तरम्।
(५) "करभप्रतिरूपके" इति पाठान्तरम्।

सुरासुरहृदययोर्म्मध्ये मनुजसुन्दरी ।
विदारणपदं तस्मात् सर्व्वप्रहरणीति च ॥ २० ॥
धरसर्व्वपदान्ते तु कामिकं हनयुग्मकम् ।
हृदयान्ते वन्धनानीत्यथाकर्षयवीप्सयेत् ॥ २१ ॥
ततो महावलेत्येतदस्त्रमन्त्रमुदीरितम् ।
त्रिभुवनेश्वरसर्व्वान्ते जनेत्युक्त्वा मनांसि च ॥ २२ ॥
हनदारययोर्युग्मं पृथङ्मे वशमानय ।
नेत्रं तारादिकाः सर्व्वे हुंफडान्ता नमोऽन्तिकाः ॥ २३ ॥
त्रैलोक्यमोहनान्ते तु हृषीकेश प्रतीति च ।
रूपमन्मथ सर्व्वस्त्रीहृदयाकर्षणेति च ॥ २४ ॥
आगच्छागच्छ च नमो मन्त्रः स्वाहापकाह्वयः ।
आवाहादिविसर्गान्तेपूक्तोऽयं चापि सूरिभिः ॥ २५ ॥
सुदर्शन (१) महाचक्रराजेत्युक्त्वा धमद्वयम् ।
सर्व्वदुष्टभयान्ते तु कुरुच्छिन्दयुगन्ततः ॥ २६ ॥
विदारयद्वयान्ते तु परमन्त्रान् (२) ग्रस ग्रस ।
भक्षयद्वयभूतानि त्रासयद्वयवर्म्मफट् (३) ॥ २७ ॥
चक्राय नमइत्येष चक्रमन्त्रः प्रकीर्त्तितः ।
शङ्खमन्त्रो जलचराय स्वाहेति परिकीर्त्तितः ॥ २८ ॥
कौमोदकि महान्ते तु वले सर्व्वासुरान्तकि ।
प्रसीद हुंफट् स्वाहेति गदामन्त्र उदाहृतः ॥ २८ ॥
सम्वर्त्तकान्ते मुसल पोथयद्वितयं ततः ।
हुंफट् स्वाहा मौसलकः शार्ङ्गाय सशराय च ॥ ३० ॥

(१) "उद्दर्शं" इति पाठान्तरम् ।
(२) "परयन्त्रान्" इति पाठान्तरम् ।
(३) "भक्षय त्रासयद्वयं वीभर हुंफट पदान्तिक" इति पाठान्तरम् ।

[ अति विह्वलं स्मरस्य शरैरतिरुचिरा।
अङ्कुशाद्यं कुन्दयुगं अङ्कुशस्य समीरितः ] (१) ॥ ३१ ॥
सानन्तलोहितवक्री वन्धाकर्षयवीक्षकौ।
वह्निजाया च माशस्य स्वमुद्राभिर्न्यसेदिमान् ॥ ३२ ॥
स्वाहान्तः पक्षिराजाय तस्य मन्त्रः प्रकीर्त्तितः।
त्रैलोक्यमोहनायान्ते विद्महे तु समुच्चरन् ॥ ३३ ॥
स्मराय धीमहीत्युक्त्वा तन्नो विष्णुः प्रचोदयात्।
गायत्र्येषा तयार्घास्तु स्थानद्रव्याणि शोधयेत् ॥ ३४ ॥
व्यस्तैर्द्वादशभिर्मन्त्रैर्नमोऽन्तैश्चार्चयेत् हरिः।
भृगुः सविन्दुः खड्गीशो देव्या मन्त्र उदाहृतः।
स्त्रक्षामर महासेन क्लीवहीनैः स्वरैरसौ।
लक्ष्म्यादीनान्तु शक्तीनां मन्त्राः पूजाविधौ स्मृताः ॥ ३५ ॥
उद्यदिनेन्दुपयोदभ्रमरपिकारावकुसुमसौरभ्ये।
सुमनोहरे च कल्पकद्रुचोद्याने रमापतिं ध्यायेत् ॥ ३६ ॥
अरुणारविन्दकर्णिकामध्यगगरुडोपरि स्थितं देवम्।
उद्यद्दिनकरकोटिप्रतिमं सिन्दूरनवजवाकान्तिम् ॥ ३७ ॥
दरचापमुसलपाशान् चक्रासिगदाङ्कुशान् भुजैर्दधानम्।
अतिहृद्ययौवनोन्मुखसौन्दर्यातिशयसाम्यनिर्मुक्तम् ॥ ३८ ॥
औदार्यकान्तिसौरभलावण्यसुधारसैर्जगत् सकलम्।
सिञ्चन्तमिव समस्तानुग्रहियं श्रीमुखाब्जसन्नासदृशम् ॥ ३९ ॥
चामीकरजहृगतयालिङ्गितदेहं श्रिया मदोत्कटया।
तदङ्गाम्बुरुहासवपिपासितभ्रान्तनेत्रषट्पदया ॥ ४० ॥

---

(१) पुस्तकान्तरे चिह्नितश्लोकस्थले एवंविध पाठो दृश्यते।
यथा—"शार्ङ्गस्य खड्गतीक्ष्णान्ते बिन्दुयुक् खड्गमन्त्रक।
अङ्कुशाद्य खड्गयुग्म चाङ्कुशस्य समीरित"॥

रोमाञ्चहर्षनिर्गतजलमुक्तालङ्कृताङ्गया सततम् ।
वामकरस्थाम्बुजया प्रतप्तकनकाभयातिसुन्दरया ॥ ४१ ॥
अनुपमसौन्दर्य्येण च सर्व्वाभरणैरुपेतयातिमुदा ।
विष्वग्बहुप्रकारानेकैः सपरिच्छदैश्च देवगणैः ॥ ४२ ॥
गन्धर्व्वदैत्यरक्षोयक्षपन्नगैर्मुनीन्द्रैश्च ।
संसेवितं पुरन्ध्रीवृन्दैश्चानङ्गवाणसन्तप्तैः ॥ ४३ ॥
भावहाव (१) मधुरस्मितवक्त्रप्रेक्षणस्खलितभाषणजातैः ।
स्पष्टकचजघनस्तनभारैः स्रस्तवस्त्रचिकुरै (२) र्मदलोलैः ॥ ४४ ॥
क्षरितमदनवारिस्विन्नकस्रैर्विवस्त्रै-
र्मदनविगतलज्जैः स्पन्दमानाधरौष्ठैः ।
मृदुतरकरपद्माक्रान्तनलच्छलीकैः
शिरसि सुपितधैर्य्यैः कम्पिताशेषगात्रैः ॥ ४५ ॥
ज्वरार्त्तैः श्वसद्भिः पतद्भिः शरीरैः
शरैर्द्दारितैर्मन्मथस्यातिघोरैः ।
समाप्यायितैस्तस्य लावण्यदृष्ट्या
समुत्थाय विष्णोस्तमेवाभियातैः ॥ ४६ ॥
करतलकलितकोकनदैस्तत्पदयुगलं च पुनः परिपूज्य ।
नयनजलैः सगद्गदवाक्यैर्भव परमेश्वर पतिः (३) शरणं नः ॥ ४७ ॥
इत्थं संप्रार्थितं तं सकलसुरवरस्त्रीसहस्रैरजस्रं
दिव्यैर्भोगार्थिभिरप्यखिलमुनिवरैर्भक्तितो मुक्तिकामैः ।
ध्यात्वा लक्षार्द्धसंख्यं जपतु मनुमिमं प्राग्वदीशोऽभिषिक्तो
द्रव्यैरेतैश्च जुह्वन् भवति मनुवरस्याधिकारी क्रियासु ॥ ४८ ॥

---

(१) "भावगर्भं" इति पाठान्तरम् ।
(२) "स्रस्तवस्त्रकुचैः" इति पाठान्तरम् ।
(३) "परमेश्वर गतिः" इति पाठान्तरम् ।

शतं दधि घृतं पयः पृथगयायुतं साज्यहविषा
घृतेन पयसा हुनेद्द्रविमितं तथा साक्षततिलैः ।
तथा दशशतोन्मितं त्रिमधुभिर्वरैर्षार्त्तवफलैः
पलाशसमिधां शतं समभितोषयेत् स्वं गुरुम् ॥ ४८ ॥
ततो लक्षत्रयं जप्त्वा कुण्डे चार्द्धेन्दुसन्निभे ।
हुनेदम्भोरुहैर्जातिकुसुमैश्च यदेरपि ।
दशांशं वैष्णवे वह्नौ ब्राह्मणांश्चैव तोषयेत् (१) ॥ ५० ॥
अम्भोधाराः सदा भिन्ने सेतौ संसिद्धयोऽखिलाः ।
यथाम्भोनिधिमायान्ति तथा यान्ति निरन्तरम् ॥ ५१ ॥
मन्त्रिणः कृतकृत्यत्वं काङ्क्षमाणाः पुनः पुनः ।
पीठे तु वैष्णवे नित्यं पूजयेत् पुरुषोत्तमम् ॥ ५२ ॥
अङ्गानि कर्णिकायामग्न्यादिदलेषु चाष्ट लक्ष्म्याद्याः ।
ताश्च स्वर्णसत्प्रीतिकास्त्वचाद्याः (२) सुदर्शने ज्ञेयाः ॥ ५३ ॥
दरचक्रगदामुसलाः पूर्व्वाद्याशासु चाग्रकोणेषु ।
वज्रादिषु (३) शार्ङ्गखड्गाङ्कुशपाशा दिशाधिपाः पूज्याः ॥ ५४ ॥
अङ्गानि देववर्म्माणि (४) मदविवशाः शक्तयोऽष्ट लक्ष्म्याद्याः ।
चामरहस्ताः सर्व्वाः स्वलङ्कृतायाश्च सुन्दर्य्यः ॥ ५५ ॥
योऽर्च्चयेत् सकृदप्येवं पुरुषः पुरुषोत्तमम् ।
प्राप्य राज्येप्सितां लक्ष्मीं प्राप्नोत्यमरवन्दिताम् ॥ ५६ ॥
दुर्भगो वसुसहस्रहुतेन स्यादतीव सुभगश्च मनोज्ञः ।
दीप्तिमत्प्रभवतैलवरेण व्याधिमोक्षणपरस्तु तथैव ॥ ५७ ॥

---

(१) "भोजयेत्" इति पाठान्तरम् ।
(२) "ताश्च स्वर्णसत्प्रीतिका तु प्राद्या." इत्यपि पाठो दृश्यते ।
(३) "पद्मादिषु" इत्यपि पाठः पुस्तकान्तरे दृश्यते ।
(४) "देववर्णानि" इति पाठान्तरम् ।

श्रीफले. प्रजुहुयात्कमलैर्व्वाकिञ्चनोऽपि रविसहस्रमतोऽसौ ।
स्याहनाधिपसमोऽयुतसंख्यं जुहुयाधिरुपयाति विनाशम् ॥ ५८ ॥
यां प्रमदामभिकाङ्क्षति तस्या नामयुतं प्रजपेन्मनुमेतम् ।
पञ्चमहर्वदनेऽष्टसहस्रं (१) सा वशमेति न तत्र विचारः ॥ ५९ ॥
ह्यारिकुसुमैर्हरिं समभिपूज्य चाष्टोत्तरं
सहस्रमपि जुह्वतः शशिभवप्रसूनैः शुभैः ।
भवन्त्यवशगा नृपास्त्रिदशभिर्द्विनैः किङ्कराः
परैर्ह्वतधनस्तथा कटुभवेन तैलेन वा ॥ ६० ॥
समिद्भिरथ बोधिजैर्हृमशतं तथाष्टोत्तरं
त्रिमासमथवा जपेद्दशशतं तथा नित्यशः ।
स एव पुनरेत्य तद्वसु समाहृतं मन्त्रिणं
प्रणम्य पुनरर्पयेत्समभितोष्य चोपायनैः ॥ ६१ ॥
राजीयाष्टोत्तरशतं जप्त्वा शत्रुगृहे खनेत् ।
ह्यारिकुसुम वापि पक्षे शुक्लेऽसिते क्रमात् ॥ ६२ ॥
शुक्लं रक्तं वेष्टितञ्च केशैयाष्टनक्तद्विषो' ।
नित्यं नेत्रसमिद्भिस्तु चाष्टोत्तरसहस्रकम् ॥ ६३ ॥
पक्षमासन्तु ततस्तेजोवत्यास्तैलं सहस्रकम् ।
जुह्वतो म्रियते शत्रुर्द्दष्टा मासचतुष्टयात् ॥ ६४ ॥
अनेन विधिना वाथ स्तम्भनं स्यात्तथैव च ।
तथैवाज्याक्तदूर्व्वाणां होमतो मुच्यते भयात् ॥ ६५ ॥
पयोव्रताचीजपतत्परस्य त्रिमासमह्नोऽन्वहतं सहस्रम् ।
नित्यं हुनेचैव ततस्त्रिमासे पूर्णे हुताशेऽपि च ह्रूयमाने ॥ ६६ ॥
मासे च मध्ये दिवसस्य.वक्षे. पार्श्वे शशाङ्कप्रतिमा सुदीप्ता ।
मंदाशते वै गुलिका सभानुः सहस्रमष्टोत्तरमेव मन्त्रम् ॥ ६७ ॥

---

(१) "पञ्चमहर्म्मदने तु सहस्रम्" इति पाठान्तरम् ।

प्रतिमन्त्रा च तां वहतो गुलिकाममरैरपि दर्शनमस्य भवेत् ।
इह सिद्धिरथास्य भवत्यखिला वड़वामुखपुष्करयानमुखा ॥ ६८ ॥
इति सिद्धमुनीन्द्रयक्षविद्याधरगन्धर्व्वसमहाप्सरोरगाद्यैः ।
प्रतिसेवितमुत्तमं विधानं गदितं तत् पुरुषोत्तमस्य विष्णोः ॥ ६९ ॥

इति जपहुतपूजाध्यानकैः श्रीधरं यो
भजति (१) स तु समग्रां सम्पदैश्वर्य्यलक्ष्मीम् ।
अधरकृतविपक्षां (२) प्राप्य लोकैकवन्द्यो
व्रजति पदमनन्तं लोकवन्द्यस्य विष्णोः ॥ ७० ॥

॥ * ॥ इति श्रीपरमहंसपरिव्राजकाचार्य्यशङ्कराचार्य्यविरचिते
श्रीप्रपञ्चसारे षट्त्रिंशः पटलः ॥ * ॥

---

समाप्तोऽयं प्रपञ्चसारः ।

---

(१) "यजति" इति पाठान्तरम् ।
(२) 'स च युवतिसमृद्धाम्" इति पाठान्तरम् ।

## सूचीपत्रम् ।

### प्रथमपटले ।



### द्वितीयपटले ।



### तृतीयपटले ।

चतुर्थपटले ।



पञ्चमपटले ।

## चतुर्थपटले ।



## पञ्चमपटले ।

## षष्ठपटले ।

सप्तमपटले ।



अष्टमपटले ।



नवमपटले ।

## दशमपटले ।



## एकादशपटले ।



## द्वादशपटले ।

## त्रयोदशपटले ।



## चतुर्दशपटले ।

## अष्टादशपटले ।



## एकोनविंशपटले ।

## विंशपटले।



## एकविंशपटले।



## द्वाविंशपटले।



## त्रयोविंशपटले।

## चतुर्व्विंशपटले ।



## पञ्चविंशपटले ।



## षड्विंशपटले ।

## सप्तविंशपटले ।



## अष्टाविंशपटले ।



## एकोनत्रिंशपटले ।

त्रिंशपटले ।



एकत्रिंशपटले ।



द्वात्रिंशपटले ।

## त्रयस्त्रिंशपटले ।



## चतुस्त्रिंशपटले ।



## पञ्चत्रिंशपटले ।



## षट्त्रिंशपटले ।





सूचीपत्रं सम्पूर्णम् ।

---